त्वरितेति ॥ त्वरितप्रतिलेख्यपत्रिकाः = सत्वरं प्रतिलेखनमपेक्षमाणानि पत्राणि । परं = केवलं । विलम्बक्षमाणि पृथक्कृत्येत्यर्थः । आनीय = उपानीय । तदा = तस्मिन् काले । स्वयं अलिखत्, न तु यथापूर्वं शिष्यैरलेखयदित्यर्थः । तेन तत्कार्ये विलम्बासहत्वं महात्मनामिप्रेतमिति सूचितम् । तत्र हेतुः सम्भाव्यते अपि तस्येत्यादिना–वक्ष्यमाणस्वकीयमहाप्रस्थानं सामान्याव्यक्तरूपेण दैवात्तदन्तःकरणसाक्षिचैतन्येन गृहीतं वा स्यादिति । तस्य = महात्मनः अनन्यसाधारणनैर्मल्यादिविशिष्टे जीवसाक्षिणि = जीवस्य द्रष्टुर्दृश्यसंयोगवियोगादिरूपं, कर्म प्राचीनं नवीनमव्यक्तं व्यक्तं च, संस्काररूपेण यत्र निलीनमवतिष्ठते स्मृत्यादिरूपेण क्वचित्प्रकाशते च स एव जीवसाक्षी । जन्मान्तरकृतस्य कर्मणः समष्टिप्रपञ्चव्यापिन ईश्वरसङ्कल्पस्य च दैवात्तत्र प्रतिभानं व्यष्टिप्रपञ्चे तत्कार्यस्वरूपानुभवश्च प्रकृतिनियतो भाव एव । निर्मलधियां महात्मनामन्तःकरणे विशेषतस्तादृशं प्रतिभानमवश्यं सम्भावनीयम् । तथा, किमपि = अनिर्वचनीयरूपं वस्तु । प्रतिभातं अपि = प्रबुद्धं किमित्युत्प्रेक्ष्यते । संभावनैवेयं नैतावता निर्णय इति विशदयति । को वेत्ति = को जानाति । महात्मनः स्वयं प्रवृत्तः संरम्भोऽसाक्षं हेतुचिन्तामतीत्य वर्तत इति भावः ॥

स्नपिता सुकृतेन, तक्षिता तपसा, तत्त्वदृशा च संस्कृता ।
महतां मतिरल्पमगलभते स्थलकालान्तरितेऽपि वस्तुनि ॥ २४ ॥

महात्मनां बुद्धौ भविष्यतोऽप्यर्थस्य प्रतिभानमुपपन्नमेवेत्युक्तसंभावनां द्रढयति स्नपितेत्यादिना—सुकृतेन = अतीतवर्तमानजन्मकृतेन पुण्यकर्मणा, स्नपिता = क्षालनेनेव निर्मलीकृता । तपसा = विषयपरित्यागप्रधानेन तीव्रात्मनियन्त्रणेन शस्त्रेणेव । तक्षिता =

छेदितस्थौल्या, सूक्ष्मतरतत्त्वस्पर्शानुकूलं सूक्ष्मत्वं प्रापितेत्यर्थः। तत्त्वदृशा=तथा जीवेश्वरजगतामधिष्ठानभूतं निर्विशेषं तत्त्वं पश्यतीति तथाविधया दृष्ट्या, संस्कृता=व्यावहारिकव्यवस्थाया मिथ्यात्वबोधस्तदधिष्ठानस्य सर्वेसमस्य सत्यत्वनिर्णयश्च बुद्धेः परमः संस्कार, तत्समवेता। महतां=महात्मनां, प्रतिपत्=बुद्धिः, स्थलकालान्तरिते=देशान्तरिते कालान्तरभाविनि, वस्तुन्यपि=विषये। प्रगल्भते=ग्रहणसमर्था भवति। पुण्यकर्मानुष्ठानेन रागद्वेषादिमालिन्यमुक्ता त्यागाभ्यासेन विषयलोभक्षयादन्तरन्त.प्रवेशसमर्था सर्वाधिष्ठानतत्त्वव्युत्पत्तिमती च क्वचिद्देशेनावृतं कालेन विप्रकृष्टं चार्थं समीपस्थवर्तमानरूपमिव गृह्णातीति भावः॥

परिदृष्टपरावरस्य तद्विमलं तस्य मनोऽस्तसंशयम्।
अपि शान्तमदृष्टवैभवादरतिग्रस्तमिवाद्य वीक्षितम् ॥ २५ ॥

अन्तःकरणसाक्षिणि भात तद्विपत्तिबीजं महतामपि स्वभावविपर्यासं जनयतीति तथात्र वर्ण्यते—परिदृष्टेति॥ परिदृष्टपरावरस्य=परमन्यत्सर्वं अवरं असारं यस्मादिति परावरशब्देन सर्वोत्कृष्टः परमात्मैवोच्यते। स परिदृष्टः सर्वत्रानुभूतो येन। तस्य महात्मनः। विमलं=निर्मलं, निष्कामतया कर्मलेपरहितमित्यर्थः। अस्तसंशय=सर्वसंशयहीनं। नित्यानित्यसारासारादिविशेषाणामात्माद्वैतरूपत्वनिश्चयादित्यर्थः। तत्=चिन्ताविषादादिरहितत्वेन प्रसिद्धम्। मन.=हृदयं। शान्तमपि=स्वत प्रशान्तमपि, कृतकृत्यतया लोभाभावाच्च। अदृष्टवैभवात्=भवितव्यतायाः प्रभावात्। अद्य=अस्मिन् दिने। अरतिग्रस्तमिव=अरतिः—स्थानासनशयनादिष्वनिच्छा, तया ग्रस्त=आविष्टं, इवेति तथाविधस्तस्य मनोविकारो न दृष्टपूर्व इति द्योतनार्थम्। अत एव वीक्षितं=लक्षणै-

रालोकितं, अन्यैरिति भाव । परावरे दृष्टे संशयनाशो, हृदयग्रन्थिभेद, कर्मक्षयस्तेन विषयरतिविलोपश्च जीवन्मुक्तानामनुभव श्रुतिप्रस्तुत अनेनानन्तरश्लोकेन च वर्ण्यते । तेन चानासक्तियोगसस्कृत तस्य मन इति द्योतित भवति ॥

स्थितमासितमुत्थितं क्वचिच्चलितं चाप्यविशिष्टहेतुकम् ।
तदमन्यत कर्मसंक्षये हृदयग्रन्थिविभेदलक्षणम् ॥ २६ ॥

अरतेरेवप्रकारो वर्ण्यते स्थितमिति ॥ अविशिष्टहेतुकं= हेतुविशेषरहितं यथा तथा क्वचित् स्थित, आसित, उत्थित, चलित चापीत्यन्वय. । स्थानासनोत्थानचङ्क्रमणानि तदुपलक्षितानि च दानादानभाषणादीनि तत्तदुचितहेतुप्रयुक्तानि नाभवन्नित्यर्थ. । कर्मसंक्षये--जीवस्वरूपसमवेतस्य सञ्चितकर्मण फलेच्छापूर्वमाचरितस्यागामिकर्मणो बीजरूपेण स्थितस्य च क्षये जाते, परावरात्मदर्शनादित्यर्थ । तत् = अरतिकृत विचेष्टितम । हृदयग्रन्थिविभेदलक्षणं = नराणा हृदय हि कर्मवासनाभिर्ग्रथितमिव स्थितम । अपरिच्छिन्नात्मानुभवात्तु तत स्वय भिद्यते । ग्रन्थिभेदेन हृदयस्य शून्यत्वमिव जायते । कर्मणो हेतौ स्वरूपे चैव शिथिलीभूते व्यवहारेष्ववश्यमरतिर्भवतीति ग्रन्थिभेदलक्षणमेव तदिति । अमन्यत = समभाव्यत । अन्यैरिति भाव । हृदयग्रन्थिभेदप्रस्तावोयमनन्तरभावि तथाविधमत्याहित ध्वनयति ॥

अनिमेषमलक्ष्यदृष्टिस्तन्नयन निर्वृततारक क्वचित् ।
समलक्ष्यत सम्मुखापतद्विषयस्पर्शचिरायितेन्द्रियम् ॥ २७ ॥

बाह्यविषयेभ्यो निवृत्तस्य चिन्ताविष्टस्येवान्तर्मुखस्य तस्य तादात्विकानामनुभावाना मध्ये चक्षुषो निष्पन्दतादिरूप वैलक्षण्य मत्र वर्ण्यते । अनिमेषेति ॥ तन्नयन = तस्य गान्धिनो नेत्रम् ।

अनिमेषं = निमीलनक्रियारहितम् । अलक्ष्यवृत्ति = दृश्यमाने गुणे तदाश्रयद्रव्ये वा लक्ष्ये वर्तते तिष्ठति, इदमेवं रूपमिति विशेषतो गृह्णातीत्यर्थः, तथा न भवतीत्यलक्ष्यवृत्ति । निर्वृत्ततारकं = विषयविशेषस्पर्शहीनत्वादस्पन्दमाना तारका यस्य तत् । क्वचित् = कुत्रचिद्विषये । संमुखापतद्विषयस्पर्शचिरायितेन्द्रिय = संमुखे-अभिमुखं आपततीति तथाविधस्य विषयस्वरूपस्य तदाश्रयद्रव्यस्य वा, स्पर्शे = ग्रहणे, चिरायितं = विलम्बितं, प्रयत्नान्तरापेक्षयेत्यर्थः, इन्द्रियं दृष्टिद्वारा प्रवर्तमानं मनसश्चैतन्यं यस्य तादृशम् । समलक्ष्यत = अदृश्यत, अन्यैरिति भावः । जीविते नैराश्यं निर्वेदं चायमर्थः सूचयति ॥

उपदेशकथा च नाचलत् पदवाक्यार्थविशेषभासुरा ।
नवराष्ट्रियधर्मयोगसङ्गतगीतोपनिषद्विराजिता ॥ २८ ॥

उपदेशेति ॥ पदवाक्यार्थविशेषभासुरा = पदानां वाक्यानामर्थानां च विशेषोऽसाधारणचमत्कारकारित्वं तेन शोभमाना । नवराष्ट्रियधर्मयोगसङ्गतगीतोपनिषद्विराजिता = नवस्य स्वतन्त्रभारते स्वीकरणीयस्य, राष्ट्रियधर्मस्य-राज्यभरणतन्त्रपद्धतेः, योगः-संबन्धसौष्ठवं, तत्र सङ्गताभ्यां—आनुगुण्येन घटिताभ्यां, गीतोपनिषद्भ्यां—तदुपदिष्टवचनाभ्यामित्यर्थः, विराजिता-शोभिता । उपदेशकथा च = उपदेशात्मक उपन्यासश्च । नाचलत् = न प्रावर्तत । वक्तव्यशेषाभावात् प्रयोजनाभावाद्वैराग्याद्वेति भावः । तत्र हि गान्धिनिवासे शिष्येभ्यः स्वदर्शनार्थमागतेभ्यश्च देशक्षेमोपयोगिन्यात्मसंस्करणप्रकारदर्शिनी च महात्मन उपदेशकथा यथावसरं निर्वर्त्यते । तत्र "कर्मण्येवाधिकारस्ते", "योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय" इत्यादीनि गीतावचनानि "ईशा-

वास्यमिदं सर्वं यत् किञ्चिज्जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मागृधः कस्यस्विद्धनम्" इत्यादीनि श्रुतिवाक्यानि च प्रसङ्गानुसारेण प्रस्तूयन्ते । भारतभूतलमेतत् प्रशान्तस्वस्थबाह्याभ्यन्तरं भूत्वा सर्वतः प्रगल्भतामिति सुदृढमपि तस्यौत्सुक्यमवसरेऽस्मिन् प्रक्षीणमित्यनेन प्रत्यायितं भवति ॥

न चखाद फलानि पूर्ववत् न पपौ छागपयश्च संभृतम् ।
न गिरा स वधूर्व्यनोदयत् न च बालान् बत पर्यलालयत् ॥

सः = महात्मा, पूर्ववत् = यथापूर्वं, फलानि = स्वादुपारेवत (Orange) द्राक्षादीनि, न चखाद = नाभक्षयत् । संभृतं = यथेष्टं संपादितं । छागपयः = अजाक्षीरं । न पपौ = नापिबत् । वधूः = स्नुषाप्रभृतीः । गिरा = सरसक्रीडालापेन । न व्यनोदयत् = नाह्लादयत् । बालान् न पर्यलालयच्च = बालकपरिलालनं च नाकरोत्, बतेति खेदे । फलाहरणमाजक्षीरपानं बालवधूविनोदनं च प्रतिदिनमवसरेषु क्रियमाणमकस्मादद्योपेक्षितमित्यर्थः ॥

"मम वीरमृतिर्वरं भवेद्वधशूलान्नलिकास्त्रतोऽपि वा" ।
इति योगदशामुना कदाप्युदितं; तन्मुहुरद्य संस्मृतम् ॥३०॥

तस्य दिनचर्यास्वुदासीनतां विपर्यासं चाकस्मिकमेवमवेक्ष्य तत्रान्ते वसन्तो जनाः तन्मनोगतं किमिति चिन्ताविष्टा महात्मनोक्तं किमप्यस्मरन्निति वर्ण्यते—ममेति ॥ वधशूलात् = शूलारोपणेन वधः—विशिष्य राजद्रोहमहापराधिषु पुरा यः प्रयुक्त आसीत् तस्माद्वधशूलात् । नलिकास्त्रतः = नलिका नाम गोलकक्षेपणोपयोगिनालरूपं यन्त्रं, तदन्तरालान्निपात्यमानमायसगोलकं च नलिकास्त्रमित्युच्यते । अनेनापि राजविद्विष्टा हन्यन्ते । शत्रवश्च

पुरतः पृष्ठतो वा पतदस्त्रं प्रयुञ्जते। स्वयंवृतमृतीनां सिद्धानां पतयोरन्यतरेण जाता मृतिः वीरमृतिः=वीरोचितो मृत्युः । मम भवेत् =भविता, वरं=मरणप्रकाराणां मध्ये स्वस्यैतदुभयं प्रियमित्यर्थः। "वरं क्लीबे मनाक् प्रिय"मित्यमरः। इति योगदृशा=पथमतीन्द्रियज्ञानवता गान्धिना । कदापि=कदाचित् पूर्वं । उदितं=उक्तं। तत्=वचनं। अद्य=अस्मिन् दिने। मुहुः=अनेकशः। संस्मृतं=तत्संबद्धैः शिष्यादिभिरित्यर्थः। तथाविधमस्याहितमधुना संभविष्यति चेति भीतास्तदन्तिकस्था इति भावः॥

अविनाशमभौतिकं महद्वपुरस्मीति यदुक्तमन्यदा।
तदनुस्मृतमैहलौकिकग्रहशैथिल्यनिबन्धनं जनैः ॥ ३१ ॥

अविनाशमिति ॥ अन्यदा=अवसरान्तरे । अविनाशं=नाशहीनं। अभौतिकं=पञ्चभूतविकारव्यतिरिक्तं। महत्=अपरिच्छिन्नं। वपुः=मूर्तिः। अहं अस्मि=अदृश्ये सर्वसमे सूक्ष्मचेतनस्वरूपे ममाहमित्यभिमानः, न पुनः क्षणिके स्थूलदेह इति भावः। इति=एवं, यत् उक्त, गान्धिनेति शेषः। तत्=वचनं। ऐहलौकिकग्रहशैथिल्यनिबन्धनं=इहलोकसम्बन्धी यो ग्रहः-बन्धः तस्य शैथिल्यं-श्लथत्वं, अनास्थेत्यर्थः, तत् निबन्धनं-हेतुर्यस्येति। लौकिकजीवितरसे विरक्त्या तथोक्तमिति जनैः=अन्तिकस्थैः, अनुस्मृतं=आलोचितमित्यर्थः। वर्तमानं तस्यौदासीन्यं जनैरित्थं व्याख्यातमित्यभिप्रायः॥

इति हेतुविहीनमाकुलव्यथितास्वस्थपरस्परैर्जनैः।
कथमप्यतिवाहितं दिनं सविता चास्तमयोन्मुखोऽभवत्॥

एवं तस्यारतेरौदासीन्यस्य च वर्णनमुपसंहरति—इतीति ॥ इति=एवंप्रकारेण, हेतुविहीनं=अकारणं यथा तथा, आकुल-

व्यथितास्वस्थपरस्परैः = आकुलं-अनवधानं, व्यथितं-दुःखितं, अस्वस्थं = अशान्तं च, परस्परं-अन्योन्यं, येषां तैः। जनैः = तदालयस्थैः, तत्र सर्वे सममस्वस्था अभवन्निति भावः। दिनं = वासरः। कथमपि = क्लेशेन। अतियापितं = क्षपितं। सविता च = सूर्यश्च। अस्तमयोन्मुखः = अस्तं जिगमिषुः। अभवत्। सवितुरस्तमयोक्तिरनन्तरां विपत्तिं सूचयति॥

जनतापनिवृत्तिहेतुतामतिसम्मानितमित्रविप्लवे।
चरमाद्रितटस्थगैरिकच्छविलिप्ताम्बुदखण्डशोणिते ॥ ३३ ॥

अस्तमयावसरस्त्रिभिः पद्यैः वर्ण्यते। तृतीयपद्यस्थस्य "समये" इति पदस्य विशेष्यत्वं समस्तपदानां विशेषणत्वं च ज्ञेयम्। जनतापनिवृत्तिहेतुतामतिसम्मानितमित्रविप्लवे = जनानां तापस्य निवृत्तौ हेतुतामत्या-हेतुरित्यभिप्रायेण, सम्मानितः-अभिनन्दितः, मित्रविप्लवः-सवितृविनाशः, यस्मिंस्तथाविधे। सर्वकल्याणकाङ्क्षिणो लोकमित्रस्य, महात्मनो विपत्त्या हन्तात्र भारते सन्तापशान्तिमिच्छन्ति केचिदिति वस्तु व्यज्यते। "हेतुतामति"शब्देन मिथ्याकल्पितं तस्य तापशमहेतुत्वमिति द्योतितं च। चरमाद्रितटस्थगैरिकच्छविलिप्ताम्बुदखण्डशोणिते = चरमाद्रितटस्थं—अस्तगिरिसानुस्थितं, गैरिकं—धातुविशेषः, तस्य छविः-कान्तिः तयालिप्तैः-तयोत्प्रेक्षितैः, अम्बुदखण्डैः—मेघशकलैः, शोणिते—रक्तीकृते। तथा पश्चिमदिशः शोणितलिप्तवक्त्रोपणत्ववर्णनमनन्तरभाव्यनर्थस्वरूपद्योतनार्थम्॥

विरताखिलराज्यतान्त्रिकव्यवहारालयकार्यसंभ्रमे।
रवितप्तदिगङ्गनाजनक्षणविक्षिप्तपयोधराम्बरे ॥ ३४ ॥

विरताखिलराज्यतान्त्रिकव्यवहारालयकार्यसंभ्रमे = विरतः-प्रशान्तः, अखिलानां सर्वेषां, राज्यतान्त्रिकानां-राज्यं-राज्ञः कर्म प्रजापालनं तस्य तन्त्रं सिद्धान्तः तद्विदुरिति राज्यतान्त्रिकाः। उक्थादित्वात् ठक्। राज्यतन्त्रविदग्धाः सचिवा इत्यर्थः। तेषां व्यवहारः—देशकालदशानुकूलं भरणशासनसम्बन्धि प्रवर्तनम्। तदुपयोगिन आलयाः—न्यायविचारो, नियमनिर्माणं, कलाप्रचरणं, चिकित्सासंविधानं इत्यादि विषयेषु पृथक् पृथक् कल्पिता निलयाः। तेषु यानि कार्याणि—कर्तव्यानि, तेषु संभ्रमः—संरम्भः-यस्मिंस्तथाविधे समये इत्युत्तरपद्यगतेन पदेनान्वयः। सायंकाले राज्यकार्यालयेषु प्रवृत्तिविरामः प्रसिद्धः। वक्ष्यमाणमस्याहितमपि भरणकार्येषु स्तम्भनमिव जनयिष्यतीति सूचितम्। रवितप्तदिगङ्गनाजनक्षणविक्षिप्तपयोधराम्बरे= रविणा—सूर्येण, तप्तैः, दिगङ्गनाजनैः—दिश एवाङ्गनाजनास्तैः, क्षणं-क्षणकाले, विक्षिप्त-वियोजितः, पयोधरो मेघः, यस्मिंस्तथाविधमम्बरं यस्मिन् समय इत्यर्थः। अङ्गनानां पयोधराम्बरस्योत्तरीयस्य विक्षेपणवचनमत्रवक्षस्ताडनावसरे संभाव्यमानत्वादासन्नशोकावेगसूचनं भवति ॥

अचिरप्रभविष्यदन्धतानियताग्रेसरदृग्विपर्यये ।
समये, समवर्तिमारुतद्रुतनिर्वापितसर्वदिक्तटे ॥ ३५ ॥

अचिरप्रभविष्यदन्धतानियताग्रेसरदृग्विपर्यये = अचिरेण प्रभविष्यन्त्या अन्धतायाः—सन्ध्याकालिकदृष्टिप्रतिरोधस्य, नियताग्रेसरः—निश्चितः पुरोगामी, यो दृग्विपर्ययः—विपरीतदर्शनं यस्मिंस्तादृशे। इदं चक्षुरिन्द्रियनाशात्मके रोगे पूर्वरूपमित्यायुर्वेदप्रसिद्धम्। समवर्तिमारुतद्रुतनिर्वापितसर्वदिक्तटे= समं-शीतोष्णं, यथा तथा वर्तमानेन मारुतेन वायुना, द्रुतं-शीघ्रं, निर्वापितानि—

शमितोष्णानि, आदित्यतेजः क्षपादित्यर्थः, सर्वदिक्तटानि—सर्वदिशां प्रान्तभागाः यस्मिन्निति तस्मिन् समये-काले दृशो-दर्शनस्य धर्मशास्त्रोपदेशस्य, विपरीतमाचरितं दृग्विपर्ययः—पापविशेषः। स च दुःखात्मकमन्धत्वं कर्तव्यमूढत्वं जनयिष्यतीत्यन्धताया निश्चितः पुरःसर इत्युक्तः। एतेनानन्तरभावि किञ्चित् पापं कर्म, तेनास्याहितं, ततश्च भारतीयेषु कर्तव्यमूढत्वं, कालचोदितः प्रज्ञाशौर्ययोः क्षयश्चावश्यं भावीति व्यज्यते॥

विरलालयविस्तृताङ्कणोल्लसितप्रार्थनमण्डपे शुभे।
मिलिता गुणजातिकर्मभिर्विविधाः पञ्चशताधिका जनाः॥

तस्मिन् समये किं संभूतमित्युच्यते। विरलालयेति॥ शुभे =मङ्गलेधूपदीपजपार्चनादिभिः पवित्रितत्वात्। विरलालयविस्तृताङ्कणोल्लसितप्रार्थनमण्डपे = विरलालयस्य विस्तृतं—विशालं, अङ्कणं—पार्श्वतः परिष्कृतं भूतलं, तत्र उल्लसितं—शोभितं, प्रार्थनमण्डपं—ईश्वरप्रार्थनोपयोगिमन्दिरं तत्र। गुणजातिकर्मभिः= गुणेन जात्या कर्मणा च, विविधाः—बहुविधाः नानागुणजात्याचारा इत्यर्थः, पञ्चशताधिकसंख्याका जनाः मिलिताः समागता इति भावः॥

कृतपूर्वनिरन्नताव्रतक्षपितोपीहितसिद्धिबृंहितः।
मदनाक्रमवन्ध्यतामितस्वहरिप्रार्थनसार्थकस्वधीः ॥२७॥

तथा तत्र सन्मिलितानां तात्कालिकश्चिन्ताविशेषः द्वाभ्यां पद्याभ्यामत्र प्रतिपाद्यते—कृतपूर्वेति॥ कृतपूर्वनिरन्नताव्रतक्षपितः =कृतपूर्वेण—सन्निहितपूर्वकालाचरितेन, निरन्नताव्रतेन—उपवासेन, क्षपितोपि—कर्शितोपि। ईहितसिद्धिबृंहितः=इष्टार्थलाभेन

परिपुष्टः। 1948 जनवरि 19 तारिकायां कृतेनोपवासेन दिल्लीस्थ-माहम्मदविहारमोचनं महात्मना कारितमिति वस्त्वत्रानुसन्धेयम्। कर्शनं देहस्य बृंहणं तु जीवस्येति ज्ञेयम्। मदनाक्रमवन्ध्यतामित-स्वहरिप्रार्थनसार्थकत्वधीः = मदनस्य "मदनलाला"ख्यस्य, आक्रमः —'बोंब'क्षेपणात्मकमाक्रमणं, तस्य वन्ध्यता—निष्फलता, तया मितं—अनुमितं, स्वहरिप्रार्थनस्य—स्वीयविष्णुभजनस्य, सार्थकत्वं —साफल्यं, तत्र धीः बोध, विस्रंभ इत्यर्थः यस्य स महामति-रित्युत्तरश्लोकेनान्वयः। मदनलालाख्यः कश्चिद् दुर्मतिः 1948 जनवरिमासैकविंशदिने, महात्मनो वपुषि बोंबं प्राक्षिपत्। तत्तु-स्खलितलक्ष्यमफलं जातमिति वस्त्वत्रावगन्तव्यम्। हरिभजन-माहात्म्यादेयमापन्निवृत्तिरिति संभावितम्॥

स महामतिरात्मदर्शनं क्षणमस्माकमिह प्रदास्यति।
स्फुटयिष्यति चाद्भुतं बृहत्तरसंदेहनिरासमार्गणम् ॥ ३८ ॥

स महामतिः महात्मागान्धी, क्षणं = अल्पे काले, आत्मदर्शनं = स्वदर्शनं, इह = प्रार्थनवेदिकायां, अस्माकं प्रदास्यति = आत्मान-मस्मान् दर्शयिष्यतीत्यर्थः। किं च, अद्भुतं = असाधारणव्याख्या-नविशिष्टं, बृहत्तरसंदेहनिरासमार्गणं = बृहत्तराणां सन्देहानां—अहिंसायर्णाश्रमनव्यराज्यतन्त्रादिविषयकाणां, निरासः-परिहारः, तदर्थं मार्गणं—गवेषणं तत्प्रकारमित्यर्थः। स्फुटयिष्यति = प्रकाश-यिष्यति, उपपादयिष्यतीति भावः। बृहत्तरसं, देहनिरासमार्गण-मिति पदच्छेदे, स्वदेहत्यागहेतोः शस्त्रस्य स्फुटनं वक्ष्यमाणमनेन सूचितं भवतीति ज्ञेयम्। तत्रैवमर्थयोजना—अद्भुतमकारणमसं-भाव्यं च, बृहत्तरसं = महावेगं। "तरस" इत्यसुन्प्रत्ययान्तस्य "तृ" धातो रूपम्। "रंहस्तरसी तु रयः स्यदः इति वेगपर्याये-

ध्वमरः। महत्त्वं चात्र भीषणत्वातिशयनिबन्धनं बोध्यम्। मार्गणं =शरम्। "मार्गणं याचनेऽन्वेषे मार्गणस्तु शरेऽर्थिनि" इति हैमः। शस्त्रसामान्यवाचकेनाप्यनेनात्र नलिकास्त्रमेव विवक्षितं भवति। समासे...तरसन्देह इति परसवर्णः, व्यस्तपदे तु तस्य पदान्त-विकल्पेन "...तरसं" इत्यनुस्वार एव॥

इति कौतुकतो दिदृक्षया विविधार्थप्रतिपत्तिलिप्सया।
नवभारतराष्ट्रियस्थितिप्रतिसंस्कारविधाबुभुत्सया ॥ ३९ ॥

इति = एवमालोच्य, कौतुकतः = सुखेन कालक्षेपायोपयुक्त-मिति कौतुकात्, दिदृक्षया = मूर्तं माहात्म्यमिव पूज्यमानं गान्धिनं द्रष्टुमिच्छया, विविधार्थप्रतिपत्तिलिप्सया = नानाविधानां कार्याकार्य तत्त्वानां विज्ञानाभिलाषेण, नवभारतराष्ट्रियस्थितिप्रतिसंस्कारविधाबुभुत्सया = नवभारतस्य स्वातन्त्र्यलाभान्नूतनवद्भूतस्य भारतभूमण्डलस्य, राष्ट्रियस्थिते:—भरणतन्त्रव्यवस्थायाः, प्रतिसंस्कारः गुणाधानेन दोषनिर्हरणेन च प्रबलतरत्वापादनं, तस्य विधाः— प्रकारविशेषास्तासां बुभुत्सया–बोद्धुमिच्छया। लोकशास्त्रजाति-गुणादीनधिकृत्य, राज्यतन्त्राणि विषयीकृत्य च महात्मा प्रतिदिनं प्रार्थनोपन्यासे हृद्यं भाषणं करोति; तच्छ्रवणौत्सुक्याद्बहवस्तत्रा-गच्छन्ति चेति भावः। 41 तमश्लोकस्थेन "समागताः" इति पदेन वाक्यस्यान्वयः॥

प्रभवो वणिजः पुराविदो भृतका राजसभाधिकारिणः।
द्विजवृद्धवयस्यदुर्बलाः विमताः क्रैस्तवनास्तिकास्तिकाः॥

शिखहिन्दुमहम्मदाः कृताकृतविद्या विविधाश्च योषितः।
मलिनामलवेषभूषणप्रतिभाश्चात्र समं समागताः ॥ ४१ ॥

कीदृशास्तथा समागता इति विव्रियते । प्रभव इति ॥ प्रभवः =धनिकाः, वणिजः=पण्यवृत्तयः, पुराविदः=पुराणज्ञाः, भृतकाः =भृत्याः, राजसभाधिकारिणः=राजकार्यालयेष्वधिकृताः, द्विजवृद्धवयस्यदुर्बलाः=द्विजाः—ब्राह्मणाः, वृद्धाः—वयोधिकाः, वयस्यास्तरुणाः, दुर्बला अशक्ताः विमताः=विविधमताचाराः, क्रैस्तवनास्तिकास्तिकाः=क्रिस्तुमतस्थाः, नास्तिका—निरीश्वरवादिनः, आस्तिकाः—तद्विपरीताः, शिखहिन्दुमहम्मदाः="सिक्" जातीयाः हिन्दवो महम्मदाश्चाकृताकृतविद्याः=विद्याभ्यासवन्तस्तद्रहिताश्च, विविधाः=नानावेषभाषागुणशालिन्यः, योषितः—वनिताः, मलिनामलवेषभूषणप्रतिभाः=वेषो भूषणं विज्ञानं च येषां मलिनं येषां च निर्मलं तदुभयविधाश्च, अत्र प्रार्थनमण्डपे । समं=समकाले विषमव्यवहारादिरहितं यथा तथा च समागताः=सम्मिलिताः। प्राय.सर्वानुग्राहकस्तत्रोपदेशः प्रचलतीत्यनेन व्यज्यते ॥

प्रतिवासरमित्थमत्र सम्मिलतां, पर्युषितेपि सङ्गमे ।
अविपन्नमनाविलं मिथः सरसं प्रेम किमप्यवर्धत ॥ ४२ ॥

प्रतिवासरं=दिने दिने । इत्थं=उक्तप्रकारेण । अत्र=अस्मिन् मण्डपे । सम्मिलतां=सङ्गच्छतां । सङ्गमे=सम्बन्धे । पर्युषितेपि =चिरावस्थितेपि । अतिपरिचितेपीत्यर्थः । अविपन्नं=अदुष्टं, नवीनमिव रसावहमित्यर्थः । अनाविलं=प्रसन्नं । विसंवादैरकलुषमित्यर्थः । मिथः सरसं=परस्परास्वादप्रियंभावुकमित्यर्थः । किमपि=असाधारणं, प्रेम=प्रणयः, अवर्धत=वृद्धिमगमत् । मताचारादिमूलतत्वबोधकस्य सर्वसमत्वप्रकाशकस्य महात्मन उपदेशमाहात्म्यादित्यर्थः ॥

गतपूर्वसमाजसंस्तुतव्यवहारार्थनिवद्धचर्वणाः ।
कतिचिन्नवधर्मसंहिताविषयप्रश्नविमर्शमादधुः ॥ ४३ ॥

महात्मना बहुशः प्रतिपादितान् प्राचीननवीनधर्मसंबन्धिनः परिष्कारानाश्रित्य, प्रार्थनमण्डपे सम्मिलितानां यथापूर्वं प्रवृत्ते वादे विशेषतस्तीक्ष्णत्वमत्र समपद्यतेति तद्वर्णनमारभ्यते । गतपूर्वेति ॥ गतपूर्वसमाजसंस्तुतव्यवहारार्थनिवद्धचर्वणाः = गतपूर्वाः—अतीताः, समाजाः—सम्मेलनानि, तेषु संस्तुताः—परिचिताः, व्यवहाराः—गान्धिनः श्रोतॄणां च प्रवादाः, तेषां अर्थेषु—प्रतिपाद्येषु, निवद्धं—संसक्तं, चर्वणं—भूयोविचारात्मकं यैः तथाविधाः, कतिचित् केचन, नवधर्मसंहिताविषयप्रश्नं=नवानां धर्माणां संहिता उपदेशग्रन्थः, तस्य विषयः—प्रतिपाद्यं तत्र ये प्रश्नाः—पूर्वपक्षसन्देहवादरूपाः इत्यर्थः, तेषु विमर्शं—विचारणं, आदधुः—चक्रुः । सत्याग्रहाहिंसावर्णाश्रमदेवालयप्रवेशमाहम्मदसमयादिकं कालदेशाद्यनुसारेण परिष्कृत्य, विपरिवृत्य च ग्राह्यमिति महात्मप्रभृतीनामुपदेशस्तावन्नवीन एव । ततस्तत्प्रतिपादकोपदेशवाक्यान्यत्र नवधर्मसंहिताख्यया निरदिश्यन्त । तेन विमर्शार्हत्वं तस्य द्योतितं भवति ॥

"समदर्शनमिष्यते विदां व्यवहारस्तु समो न शोभनः ।
अविरक्तदशा ह्यपेक्षते ननु वर्णाश्रमधर्मयन्त्रणम्" ॥ ४४ ॥

विदां = लोकशास्त्रतत्त्वज्ञानां = विभिन्नरूपेषु पदार्थेषु सामान्यधर्मग्रहणं, इष्यते = अभ्युपगम्यते, समः व्यवहारः तु = जातिगुणकर्मशीलशौचादिभिरभ्यासनिरूढैः परस्परविसदृशीमेव विपरतिमनन्यभावेन बिभ्राणानां स्नानपानाद्यनन्तात्मको यो व्यवहारस्त्रिविधकरणसंबन्धी चिन्तन भाषणगमनागमनादिरूपः तस्य सम-

भाव, न शोभन=न साधुर्भवति । अनादिवासनाचोदितेषु प्रकृत्यनुकूलेनाभ्यासेन दृढीकृतेषु तेषु प्रयुज्यमान समीकरण-प्रयत्नस्तावदपूर्वं विषमभावमुत्थापयेदित्यर्थ । तर्हि विषमव्यवहार-निमित्तक सामुदायिकयोगक्षेमभङ्ग कथ निवार्यत इत्यत्राह—अविरक्तदशेति ॥ अविरक्ताना—विषयासक्ताना दशा=अवस्था, इन्द्रियसुखव्यतिरेकेणात्मन स्थितिर्नास्तीति यत् प्राकृत जीवधारण तत्, वर्णाश्रमधर्मयन्त्रण=ब्राह्मणादयश्चत्वारो वर्णा, ब्रह्मचर्यादयश्चत्वार आश्रमाश्च स्मृत्यादिप्रसिद्धा धर्मविशेषैर्विभक्ता तद्धर्ममतिलङ्घ्य व्यवहरन्तो राज्ञा दण्ड्यन्त इति प्राचीन सम्प्रदाय । तादृश नियन्त्रणमपेक्षते=अवलम्ब्यावतिष्ठते । रागद्वेषाद्यवखण्डितचित्ताना प्रजाना व्यवहारे समत्वमसाध्यमनर्थकर चेति भाव । ननु इति प्रतिवादिसबोधनम् ॥

"परिणामसहस्रदन्तुरो युगधर्मः परिवृत्तिमर्हति ।
विपदे कल्हाय वा भवेत् प्रकृतिः सा पुरुषैरुपेक्षिता" ॥ ४५

वर्णादिधर्माणा तात्पर्यमन्यथान्यथा गृहीतमेतद्देशकालानुरूप व्यवहारे स्वीकर्तुमशक्यमयुक्तमनर्थकर चेति तत्परिवर्तन कार्यमिति पक्षान्तरमाह—परिणामेति ॥ परिणामसहस्रदन्तुर=परिणाम सहस्रेण—अनन्तेन परिवर्तनेन, दन्तुर—निम्नोन्नत, उत्कर्षापकर्षविपर्यास गत । युगधर्म=कृतत्रेतादियुगान्तरेषु प्रागनुष्ठितो धर्म । परिवृत्ति=एतद्देशकालाद्यनुसारेण विपर्यासन, अर्हति=क्षमते। धर्मपरिवर्तनमुपपन्नमेवेति भाव । सा प्रकृति=युगान्त रोपविभ्यनुसारेण पालित कर्तव्यविशेषनिरूढ स्वभाव, पुरुषै=परीक्षणाधिकारिभिर्विचारशीलैस्तत्तत्कालिकैर्जननायकै, उपेक्षिता=यथा तथा वा भवत्विति परित्यक्ता सती, विपदे=दुर्भिक्षमोघ

सर्गिकरोगः शत्रुपीडा चेत्याद्यापदे, कलहाय वा=जात्यादिनिबन्धने जीवितप्रकारे मिथः पृथग्भावप्रवणतया च आभ्यन्तरः कलहस्तस्मै, भवेत्=विपत्तिं कलहं च जनयिष्यतीत्यवश्यं धर्मपरिवर्तनं कार्यमिति भावः ॥

"क्वचिदस्तु रिपोरहिंसया प्रशमो व्यक्तिगते वधोद्यमे ।
मतविस्फुटिते मदोत्प्लुते सहनं कुत्र शमाय कल्पते" ॥ ४६ ॥

महात्मना उपदिश्यमाने सहनसमरात्मनि नव्ये अहिंसाव्रतयोगे कश्चिद्दोषमुत्थापयति, क्वचिदिति ॥ वधोद्यमे=वधारम्भे, व्यक्तिगते=व्यक्तिमाश्रिते, एकपुरुषाश्रिते, एकस्य स्वविरोधिजनं प्रति "अहमेनं हन्मी"ति जाते संरम्भ इत्यर्थः । क्वचित्=न सर्वत्र, अहिंसया=नव्यप्रकारकाहिंसाधर्मप्रयोगेन, "प्राणानपि त्यक्ष्यामि न तु सत्यप्रतिष्ठितात् धर्मात् प्रचलिष्यामी"ति दृढं निश्चित्य विरोधिकृतहिंसायाः सहनेनेत्यर्थः । एतेन हृदये विकसिते, धर्मबीजाङ्कुरणावकाशे लब्धे, रिपोः=घातुकस्य, प्रशमः=स्वाभिनिवेशस्य निन्द्यत्वं परपक्षस्य धर्म्यत्वं च बुध्वा हिंसाकर्मतो निवृत्तिः, अस्तु भवतु । क्वचिदस्तु इत्यस्वरसत्वोक्त्या तादृशप्रशमस्यासाधारणत्वं सूचितं भवति । समष्टिगते तु वधोद्यमे नैवमित्याह—मतविस्फुटितेति ॥ मतानि—क्रैस्तवमाहम्मदादीनि तैर्हेतुभूतैः विस्फुटिते—विकसिते, अयथावद्गृहीतस्वमतधर्माः केचिन्मतान्तरीयाणां हिंसां स्वमतागमोपदिष्टं धर्मं मन्यन्ते । अतो मताभिमानो हिंसाहेतुतया वर्धत इत्यनुभवः । मदोत्प्लुते=मदेन=दर्पेण, उत्प्लुते—उद्धते । परमकाष्ठां गत इत्यर्थः । मतभेदस्पर्धया कार्याकार्यविस्मरणात् समुदायध्वंसनपरे हिंसाभिनिवेशे प्रवृत्त इति यावत् । सहनं=घातुकमनः प्रशमनायाहिंसाव्रतिनस्तत्पीडासहनसन्नद्धत्वं ।

कुत्र = कस्मिन् विषये फलाय = प्रतिपक्षप्रशमात्मककार्येत्यर्थः । कल्पते = समर्थं भवति? न कुत्रापि तद् सफलं भवेदित्यर्थः । तथा च नायमहिंसोपदेशः समुदायक्षेमकाङ्क्षिभिः स्वीकरणीय इत्यर्थः ॥

"यदकाममभेदभावनं तदहिंसेति महात्मनो मतम् ।
चिदुपाधिसमष्टिरञ्जिनी नवमी सिद्धिरियं हि कामधुक्" ॥

अहिंसा नामात्मनि समवाय—संबन्धेन निरूढः संस्कार एव, न तु परप्रध्वंसकर्मा—भावः केवलमित्युपपाद्योक्तदोषं परिहरति, यदकाममित्यादिना ॥ अकामं = स्वप्राणरक्षणे परप्रशमने वा योभिनिवेशस्तद्रहितं, अभेदभावनं = स्वस्य परस्य च व्यावहारिको जातिगुणकर्मादिकृतो यो भेदः तस्य परमात्मन्यारोपितस्य तत्त्वविवेकादप्रतिभाने, सर्वात्मैकत्वानुभवो भवति । तस्य भावनं—संस्कारः फलासक्तिरहिता सर्वसमत्वभावनेत्यर्थः । एवमात्मनि संस्कृते, रागद्वेषादिमालिन्यापगमात् शौचमास्तिक्यं दयादाक्षिण्यमनौत्सुक्यमित्यादयः, सात्विका भावाः प्रकाशन्ते । तत् = तादृशमात्मनो निर्मलत्वं । अहिंसा = भावरूपिणी ; हननक्रियाभावो नात्राहिंसालक्षणमिति, महात्मनः मतम् = महात्माभिप्रायः । चिदुपाधिसमष्टिरञ्जिनी = चेतनस्वरूपां सूक्ष्मशरीरसमष्टिं हिरण्यगर्भसंज्ञितां रञ्जयतिस्तत्सायुज्येनाप्याययानुकूलयतीति तथाविधा । इयं = अहिंसा, नवमी = अणिमाद्यष्टमहासिद्धिव्यतिरिक्ता । सिद्धिः = अमानुषव्यवहारशक्तिः । कामधुक् हि = कामं दोग्धि—उपस्थापयतीति तथा भूता । "आपूर्यमाणमचलप्रतिष्ठं समुद्रमापःप्रविशन्ति यद्वत् । तद्वत् कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी"ति भगवद्गीतावचनमत्रानुसन्धेयम् । "बुद्धिर्ज्ञानमसम्मोहः ...अहिंसा...भवन्ति भावाभूतानां मत्त एव पृथग्विधाः" इति

गीतावचने भावरूपेणैवाहिंसा निर्दिष्टा । भूतेषु तत्संपत्तिश्चेश्वराद्भवतीति च स्पष्टम् । अक्रामस्य कामप्राप्तिर्नाम समुद्रस्य नदीजलप्राप्तिरिव सङ्गवर्जितमौत्सुक्यरहितमविकारजनकं च किमपि सौहित्यमेवेति ज्ञेयम् । एवंविधाहिंसाधर्मसंस्कारः समष्टिचैतन्यप्रवृत्तिनियामकत्वात् पूर्वोक्तदोषरहितो भातीति भावः ॥

"उपपन्नमुदाहृतं तु न क्वचिदेतत्, समुपास्यते जनैः ।
यदि केवलसात्त्विकी विधेर्नरसृष्टिर्भविता कदाचन" ॥४८॥

समष्टिसूक्ष्मशरीरतादात्म्यं प्राप्य सामुदायिकाहिंसारतिः प्रशमनीयेति यदुक्तं तदुपपन्नं=युक्तियुक्त । किं तु एतत् क्वचित् न उदाहृतं=तथा प्रशमनं कुत्रापि विषये प्रयोगेणानुभवयोग्यं न कृतं । तादृशी सिद्धिर्दिव्यप्रभावरूपा लोके दुर्लभैवेति भावः । विधेः=ब्रह्मणः, नरसृष्टिः=मनुष्यसृष्टिः, कदाचन=अचिन्तनीये कस्मिंश्चित्काले, केवलसात्त्विकी=सत्त्वगुणमात्रोपादाना, भविता यदि=भविष्यति चेत्, तदा जनैः=सामान्यजनैः, उपास्यते=अनुष्ठीयते, एतदित्यनुवर्तते । रागद्वेषादिप्रवर्तकेन रजसा मोहजनकेन तमसा च वर्जितः सत्त्वगुण एक एव ब्रह्मणा सृष्टावुपादीयेतेत्यसंभव एवायम् । तथा च तादृशाहिंसायोगसिद्धिर्नोदाहरणमर्हतीति प्रतिवादिनोऽभिप्रायः ॥

"ननु भारतबन्धमोचनं बहुमाहस्मदसौहृदार्जनम् ।
परमेश्वरमन्दिराविशच्छ्वपचब्राह्मणभेदमार्जनम्" ॥ ४९ ॥

एतच्च बहुप्वर्थेपूदाहृतं महात्मनैवेति वादी त्रिभिः पद्यैर्दर्शयति नन्विति ॥ ननु=अभिमुखीकरणार्थं प्रतिवादिसंबोधनमिदं । भारतबन्धमोचनं=भारत—भूमण्डलस्य, बन्धमोचनं—आङ्ग्लेया-

धीनत्वरूपास्वातन्त्र्यस्य भञ्जनं । बहुमाद्दम्मदसौहृदार्जनं=बहूनां माहम्मदानां, सौहृदस्य—मैत्रीबन्धस्य, आर्जनं—सम्पादनं । परमेश्वरमन्दिराविशच्छ्वपचब्राह्मणमेदमार्जनं=परमेश्वरमन्दिरं-देवालयं, आविशतां—प्रविशतां, श्वपचानां—चण्डालानां, उपलक्षणमिदं सर्वनीचजातीनां, ब्राह्मणानां च-मेदस्य, मार्जनं—विनाशनं । आङ्गलेयाधिकारिभिः सह सत्याग्रहादिप्रयोगः, माहम्मदानां हैन्दवेषु चिरानुबद्धप्रवृद्धविद्वेषाणां विस्रंभजनकौतुनयो मततत्त्वबोधनं च जात्या कर्मभिराहारादिभिश्च निकृष्टास्त्रैवर्णिकैः स्पर्शनदर्शनसान्निध्यादिषु निषिद्धाः, श्वपचादय इति, वेदशास्त्रकर्माधिकाराच्छौचशीलादिभिश्चोत्कृष्टाः पूज्याश्च ब्राह्मणा इति, च यो मेदश्चिरात् पालितस्तस्य मार्जनाय देवालयप्रवेशनयज्ञ इति भारतभूस्वातन्त्र्यलाभाय महात्मना सम्पादितेषु व्यवहारेष्वहिंसाधर्मसंस्कार पथान्तरङ्गं साधनमिति भावः ॥

जनसम्मतराज्यतन्त्रसंघटनापीठदृढाश्मबन्धनम् ।
नवलौकिकसन्धिविग्रहायवधातव्यगुणप्रसाधनम्  ॥ ५० ॥

जनसम्मतराज्यतन्त्रसंघटनापीठदृढाश्मबन्धनम्=जनसम्मतस्य—प्रजानां भूरिपक्षानुरोधिनो, राज्यतन्त्रस्य—भरणप्रयोगव्यवस्थायाः "डिमोक्रसी"ति ख्यातायाः, सङ्घटना—तस्याः पीठस्य-आधारस्य, दृढं—स्थिरं, अश्मबन्धनं—शिलासन्धानं, भरणनियमाजनप्रतिनिधिभिर्विधातव्यास्तन्निर्वहणमपि प्रजाभ्युपगतैरधिकृतैः कार्यमित्यस्य परिष्कृतस्य राज्यतन्त्रस्यानुकूलं प्रजानामाशयसामरस्यं, स्वार्थपरित्यागः, परार्थपोषणं चेत्यादि, महात्मना बहुविधैरुपदेशैः, तैराभूयिष्ठैश्च व्यवहारैः, सुप्रमिति भावः । नवलौकिकसन्धिविग्रहायवधातव्यगुणप्रसाधनं=नवेषु—नवीनपरिष्कारप्रचु-

रेषु, लोकेषु भवन्तीति नवलौकिकाः, सन्धिविग्रहादयः केन कदा कुत्र कस्यां दशायां सन्धातव्यं विगृहीतव्यमित्यादिरूपेण प्रसिद्धा राजधर्माः। आदिशब्देन यानासनादय उक्ताः। त एवावधातव्याः— अप्रमादेन प्रयोक्तव्याः, गुणाः—राज्यतन्त्राश्रिता धर्माः, तेषां प्रसाधनं—प्रकर्षेण देशकालाद्यनुकूलसंस्कारेण सङ्घटनं। महात्मा हि मुख्येषु राष्ट्रधर्मेपूपदेष्टा तदधिकृतानामिति प्रसिद्धम्॥

चिरमुन्नतजात्यधःकृतोद्धरणं चेति यदन्यदीदृशम्।
सकलं तदहिंसया दृढीकृतसत्त्वेन महात्मना कृतम् ॥ ५१ ॥

चिरं = बहोः कालादारभ्य, उन्नतजात्यधःकृतोद्धरणं = उन्नता जातिर्येषां तैः ब्राह्मणादिभिः, अधःकृतानां—नीचैर्निपातितानां, उद्धरणं चेति = उच्चैः स्थानेषु स्वीकरणं, तेषां स्वप्रख्यापितेन "हरिजन" नाम्ना व्यवहारः, कुलाचारपरिष्करणं, राजकीयाधिकारदानं, वापीकूपघण्टापथेषु, विद्यालयेषु, भोजनालयेषु, प्रादेशिकसांस्थानिकसभासु चोत्कृष्टजातीयैः सह समानकक्ष्यायामङ्गीकरणं चेत्यादिभिरित्यर्थः। देवालयप्रवेशनं तु पृथगुक्तं प्राधान्यादिति ज्ञेयम्। यत् ईदृशमन्यत् = मतविपरिवर्तनं, मद्यवर्जनं, खादिचक्रप्रवर्तनं, त्रिवर्गसाधनेषु सर्वत्र समं प्रचोदनं चेति समुदायसङ्घटनाय संपद्विवृद्धये चोपयुक्तं, तत् सकलं = तत् सर्वं, अहिंसया—पूर्वोक्तप्रकारया, दृढीकृतसत्त्वेन = दृढीकृतं—स्थिरीकृतं, सत्त्वं—मनोबलं यस्येति। महात्मना कृतं = असाधारणमतिविषममनेकविघ्नजटिलं च पूर्वोक्तं कर्मजालं स्वकीयाहिंसाव्रतप्रभावेन, साक्षात्परम्परया च प्रयुक्तेन साधितमित्यभिप्रायः॥

"इदमन्यदनन्यगैर्गुणैः स महात्मा यदुपास्यते जनैः।
विपरीतफला तु सा न किं तदहिंसाविनियोगपद्धतिः ॥५२॥

द्रागग्रपरः प्रत्यवतिष्ठते, इदमन्यदित्यादिना ॥ अनन्यगैः=अन्यत्रादृष्टैः, विवेकस्तपो, ध्यानं, दीर्घदृष्टिः, सत्यसन्धता, धैर्यमनुनयपाटवं चेत्यादिभिर्गुणैः=धर्मविशेषैः, स महात्मा, जनैः=अविशेषेण सर्वैः, उपास्यते=आप्तबुद्ध्या सेव्यते इति, यत् इदं=अपदानजालं, अन्यत्=कारणान्तरसम्पन्नं, अहिंसाफलस्योदाहरणतया न ग्राह्यमित्यर्थः । किं तु सा तदहिंसाविनियोगपद्धतिः=तस्य अहिंसायास्तदुपज्ञाताया इत्यर्थः । विनियोगपद्धतिः=प्रयोगसरणिः, विपरीतफला न किं?=विपरीतं प्रतिकूलं फलं यस्यास्तादृशी न भवति किं? इत्याक्षेपः । विपक्षस्य, प्रशमनायेति प्रयुज्यमाना वधेप्सविघ्नेन हिंसाकर्मणि साहाय्यं ददातीति भाव ॥

बहुलक्षमिता निरागसः स्वजना हन्त यमक्षयं गताः ।
विमतस्थविचित्रहिंसया बलिनां नः परिपश्यतां पुरः ॥५२॥

तदेव फलवैपरीत्यमुपपादयति बहुलक्षेत्यादिना ॥ बहुलक्षमिताः=अनेकसंख्याकाः, बहुलं—अभीक्ष्णं क्षमिनाः क्षमाशालिनः कृताः आत्मसंयमविद्योपदेशेनेति चार्थः । स्वसंरक्षणोपायेष्वकृतोद्यमा इति भावः । अत एव निरागसः=विपक्षप्रतिकूलकर्मवर्जिताः, स्वजनाः=स्वसंघनिघ्नो जनाः, विमतस्थविचित्रहिंसया=विमतस्थानां—असद्विपरीतमतधर्मनिष्ठानां, विचित्रया—नानारूपया, शाखाच्छेदनमग्निक्षेपणं ताडनभेदनाकर्षणविकर्षणादिकं च कृत्यान्ते जीववियोजनमिति हिंसायां वैचित्र्यं बोध्यम् । स्वमतविरुद्धानां मारणं स्वधर्म इति ज्ञातिद्वेषरूपिता मदेन परस्य चित्रवधे लीलया प्रवर्तन्ते । धनाहरणादि रसाश्च बहवस्तत्सहचरा भवन्ति । बलिनां=देहदार्ढ्येन, धैर्येण, सेनया च बलवतां, परिपश्यतां=साक्षाद्वीक्षमाणानां । न=अस्माकं । पुरः=पुरोभागे, यमक्षयं गताः=

यमालयं प्राप्ताः मृता इत्यर्थः । अहिंसाङ्गभूतात्मनियन्त्रणसंस्कार-वशात् परिकरशून्यतया निष्फलवीर्या वयं जीवन्मृता एतद्वैशसं पश्यामो हन्तेति शोके ॥

दुहिता, भगिनी, कुटुम्बिनी जननी चेति विधर्मराक्षसैः ।
अपमानितमर्दिता हताः बलिनां नः परिपश्यतां पुरः ॥५४॥

दुहितेति ॥ पुत्री, सहजा, भार्या, माता चेत्येवं भूता अस्मदीयाः स्त्रियः । विधर्मराक्षसैः = विधर्माणो—मतान्तरस्थाः राक्षसा इव तैः, क्रूरकर्मप्रियैरित्यर्थः । अपमानितमर्दिताः = पूर्वमपमानिताः पश्चान्मर्दिताः पीडिताः, हताः = अन्ते मारिताः, बलिनां न इत्यादि पूर्ववत् ॥

" निपतन्तु विपक्षरक्षसां पदसंवाहनपुण्यभाविताः ।
त्रितयाक्षरमन्त्रयन्त्रिताः स्वजनाः किं नरयज्ञपावके " ॥५५॥

मतान्तरीयप्रसादनं स्वपक्षस्य पोषणार्थकमित्युपदेशं कश्चिन्निन्दति—निपतन्तु इत्यादिना—विपक्षरक्षसां = क्रूराणां विमतस्थानां । पदसंवाहनपुण्यभाविताः = पदसंवाहनं—पादशुश्रूषणं—प्रसादनार्थकानां निकृष्टकर्मणामुपलक्षणमिदं । तदेव पुण्यं—शुभकर्म, तेन भाविताः—संस्कृताः । स्वजनाः = अस्मदीयाः, त्रितयाक्षरमन्त्रयन्त्रिताः = त्रितयाक्षरमन्त्रेण—"अहिंसे"ति मन्त्रेण । वीर्याधिक्यान्मन्त्रत्वारोपः । तेन यन्त्रिताः—बद्धाः निर्व्यापारीकृताः । नरयज्ञपावके = नरमेधयागवह्नौ, निपतन्तु किं? = पतन्तु वा? तथा मरणमिष्टमेव वा इति काकुः । मतान्तरीयहिंसनं पुण्यकर्मेति तेषामेतत्कर्म यद्यपि पवित्रितमिति तत्र प्राणत्यागेनास्मदीयानां पशुत्वलाभोऽपि तत्प्रसादनोपयोगितया पुण्यसंपत्तये भवतीति

चात्र वचने बलवानाक्रोशो गम्यते । एतादृशं चित्रवधमुपेक्षमाणा देशिका निन्दनीया इति भावः॥

परिहार्यमिदं तु वैशसं न विषह्यं विधिदुर्विडम्बनम् ।
न विनश्यतु हा तपस्विनी भुवि वर्णाश्रमधर्मदेवता ॥ ५६ ॥

पुण्यं, मन्त्रः, यज्ञ इत्यादिशब्दैराक्षिप्तं वैदिकं कर्म स्मरन् कोपि हिन्दुमहासभापक्षीयः प्रक्षुब्धमतिरेवमाह, परिहार्यमित्यादिना । इदं वैशसं तु परिहार्यं= पूर्वोक्तप्रकारेण हैन्दवैरनुभूयमानं वैशसं, परिहार्यं = केनापि प्रकारेण निवारणीयम् । विधिदुर्विडम्बनं= विधिः—वेदशास्त्रोपदेशः, "अहिंसा परमो धर्मः", "उपकार-प्रधान:स्यादपकारपरेप्यरौ" इत्यादिः । निषेधस्याप्युपलक्षणमिदं । तेन "मा हिंस्यात्सर्वाभूतानी"त्यादिरुपदेशविषयसामान्याद्गृह्यते । तस्य दुष्टं विडम्बनं—जातिगुणादिनिबन्धनमधिकारं, देशकालादिनि-रूपितं प्रयोगभेदं चाविगणय्य पाषण्डब्राह्मणपण्डितपामरादि साधारणेन व्यवहारेणानुकरणं, सनातनधर्मनिष्ठानां प्रतारणं वा । न विषह्यं= नास्माभिः सोढुं शक्यं । तपस्विनी = कृशा, नव्यशिक्षितैरुपेक्षितेत्यर्थः । हा= इत्यनुतापद्योतनं । वर्णाश्रमधर्मदेवता= वर्णाः ब्राह्मणादयः, आश्रमाः ब्रह्मचर्यादयः, एते ज्ञाने कर्मणि व्यवसाये सेवायां च प्रवृत्ता हैन्दवसमुदायस्य सौभाग्यमैकमत्यमभ्युदयं च पालयन्ति स्म । ते संप्रति क्षत्रियाबलम्बाभावाच्छिथिलमर्यादाः संवृत्ताः । विद्याभ्यासेनास्तिक्येन पुण्यकर्मणा च चित्तविशुद्धिस्तया चात्मनः सात्त्विकश्चेतनाप्रसाद इति यास्माकं पुरुषार्थप्रदा धर्माधिष्ठानदेवता सा । भुवि = न केवलमस्मत्समुदाये प्रशमकाङ्क्षिणामन्यसमुदायानां देशेष्वपि । न विनश्यतु = नात्यन्तिकमभावं प्राप्नोतु । वर्तमाने धर्मविप्लवेप्यविनश्यत्स्वरूपा सैवदेवता-

स्मान् पालयेदिति प्रार्थना। एतेन तस्य सनातनधर्मपक्षः साधुनर इत्युक्तं भवति॥

"अपि निर्दयरामहस्तगः स कृपाणो न पुनर्भविष्यति।
यदि शूद्रमुनिर्यदीश्वरो यदि धर्मश्च विशृङ्खलक्रमः" ॥५७॥

पूर्वोक्तरीत्या समुत्तेजितः कश्चित् सद्यः स्फुरितामर्षः सहसा दुःश्रवं वचनमित्थमाह, अपीत्यादिना॥ निर्दयरामहस्तगः = निर्दयः रामहस्तः—श्रीरामभद्रकरः, तं गच्छतीति, स कृपाणः शम्बूकवधार्थं श्रीरामेण प्रयुक्त उत्तररामायणे प्रसिद्धः खड्गः "रे हस्त! दक्षिण! मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणम्। रामस्य गात्रमसि दुर्वहगर्भखिन्नसीताविवासनपटोः करुणा कुतस्ते।" इति भवभूतिना वर्णितश्च। शूद्रमुनिः यदि = शूद्रजातीयस्तापसः भवति चेदित्यर्थः। ईश्वरः यदि = तत्साक्षितया स्थितः सर्वज्ञः सर्वशक्तश्च समष्टिचेतनोपाधिकः ईश्वरोस्ति चेत्। धर्मः च = सनातनधर्मः, विशृङ्खलक्रमः यदि = अधिकारादिनियममनादृत्याचरितः भवति चेत् तदा। पुनः = पश्चाद्युगान्तरेपि, न भविष्यति अपि = न भवेदपीति संभावना। त्रेतायुगीयशम्बूकवधो हि धर्मस्थापनार्थमीश्वरेण कृतः। सति तत्सदृशे धर्मविप्लवव्यवहारे एतत् कलिकालेपि तत्सदृशस्तपस्वी नूनमीश्वरप्रेरितेन केनापि रामेण निहन्येतैवेति भावः। "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत! अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहं" इति गीतावचनमत्रानुसन्धीयते॥

इति पक्षविपक्षनिग्रहक्रमसन्नाहविशेषदुर्दिने।
श्रुतपञ्चमघण्टिकारवस्तनितास्तत्र जनाश्चकम्पिरे ॥५८॥

"समदर्शनमिष्यते"—इत्यारभ्य चतुर्दशभि पद्ये प्रतिपादित प्राक्तन नव्यधर्मप्रश्नप्रतिवचनात्मकं वादमुपसहृत्य प्रकृतकथामनुसन्धत्ते, "इति पक्ष" इत्यादिना। इति = एवप्रकारेण। पक्षविपक्षनिग्रहक्रमसन्नाहविशेषदुर्दिन = पक्ष -महात्मनोपदिष्ट सत्याग्रहाहिंसादि न यधर्मव्यवहाररूप। विपक्ष -तद्विपरीत सनातन धर्मप्रह्लादि- तयोर्विपये विवदमानाना मिथो निग्रह —खण्डन तस्य क्रम —खण्डितस्य मण्डन ततो मण्डितस्य च खण्डनमिति पौर्वापर्यानुवृत्तिः तत्र य सन्नाहविशेष —परपक्षनिरासकयुक्तिप्रकटनात्मक परिकरबन्ध, तेन विशेषदुर्दिन—भृशान्धकार., श्रोतृणामन्यतरपक्षनिर्णयशक्त्यभावजन्यो मोह, "मेघच्छन्नेऽह्नि दुर्दिन" इति प्रसिद्ध तम प्रसर इति च। यस्मिंस्तस्मिन्नवसर इति शेष। जना = प्रार्थनमण्डपस्था, श्रुतपञ्चगघण्टिकारवस्तनिता = पञ्चम घण्टावादनशब्द एव स्तनित ये श्रुत ते। घण्टारवस्यात्र दुर्दिनानन्तरभवस्तनितत्वारोपोऽतर्कितपूर्वत्वाद्भयजनकत्वाशयेन। चकम्पिरे = कम्पितवन्त। वादप्रसक्तावधानतया सहसा घण्टाध्वनिस्तानकम्पयदिति भाव॥

॥ इति पूर्वार्धं समाप्तम्॥

---

## उत्तरार्धम्॥

अथ तत्र "महात्मगान्धि कीजय" शब्दस्तुमुलो व्यजृम्भत।
समविस्फुटितस्तदागमग्रहणोत्कण्ठितसर्वकण्ठजः ॥५९॥

अथ घण्टावादनानन्तर, तत्र = मण्डपे, तदागमग्रहणोत्कण्ठितसर्वकण्ठज = तस्य-महात्मन - आगमग्रहणे-आगमनज्ञाने, उत्क-

ण्ठितानां—उत्सुकानां, सर्वेषां कण्ठेभ्यः जातः, समविस्फुरितः = समकालमुत्थितः । तुमुलः = सङ्कीर्णः । "महात्मगान्धिकीजय" शब्दः = तथाविधः प्रसिद्धो जयघोषः । व्यजृम्भत = अवर्धत । उच्चैरश्रूयतेत्यर्थः । प्रार्थनसभागमनं पञ्चमघण्टायामेवेति जनानामेवं प्रवृत्त उत्साह इति भावः ॥

विषयान्तरमुक्तवृत्तयो विरलागारविशेषदृष्टयः ।
अभिलक्ष्य किमप्यहो जनाः परमानन्दमभुञ्जतक्षणम् ॥ ६० ॥

दूरात्तद्दर्शने जातस्तेषामाह्लादोवर्ण्यते, विषयान्तरेति ॥ जनाः = तत्र वर्तमानाः । विषयान्तरमुक्तवृत्तयः = द्रष्टव्यश्रोतव्यादिभ्यः शब्दस्पर्शादीन्द्रियार्थेभ्यश्च, मुक्ता—निवृत्तावृत्तिर्मनोव्यापारः येषां ते । विरलागारविशेषदृष्टयः = विरलागारे—महात्मनो वासस्थाने विशेषेण दत्ता दृष्टिर्येषां ते । अगारविशेषे—स्वकीयगृहे तदुपलक्षितेषु पुत्रदारार्थेषु च, विरला—स्वल्पा, दृष्टिः—सङ्कल्परूपं दर्शनं येषां तथाविधा इति च । विरक्ता इति भावः । किमपि = वक्ष्यमाणं महात्मनो रूपं, ब्रह्मेति च । अभिलक्ष्य = साक्षात्कृत्य, क्षणं = अल्पकालं । परमानन्दं = अखण्डानन्दं । अभुञ्जत = अन्वभूवन् । दृढमार्थिनत्वात् स्वतःप्रधानत्वाच्च गान्धिनः परमात्मनश्च दर्शनमतीवाह्लादायाभवदिति भावः । अत्र एषणात्रयरहिता योगिनो निर्वचनीयं निर्विकल्पं ब्रह्म साक्षात्कृत्य समाधावात्मानन्दमन्वभूवन्निति श्लेषेण गम्यमानोर्थः महात्मदर्शनसुखस्य ब्रह्मानन्दसदृशत्वं व्यञ्जयति । अहो = आश्चर्यमेतदिति भावः ॥

निजधाम विसृज्य तोरणादवतीर्यावनिमास्थितः प्रभुः ।
अनुगृह्य दृशा कृताञ्जलिः चलितः प्रार्थनमण्डपं प्रति ॥ ६१ ॥

प्रभुः = महात्मा, निजधाम = स्ववासस्थानं । विसृज्य त्यक्त्वा । तोरणात् = गृहद्वारात् । अवनिं = भुवं । अवतीर्य = बहिरागत्य, आस्थितः = अवतिष्ठमानः सन् । दृशा अनुगृह्य = सकरुणया दृष्ट्या शुभाशंसनं कृत्वा । कृताञ्जलिः = कृतो विहितोऽञ्जलिबन्धो येन यस्मै चेत्यर्थः । प्रार्थनमण्डपं प्रति = मण्डपप्राप्तिमुद्दिश्य । चलितः = मन्दमन्दं गतः । अनुगृह्येति कृताञ्जलिरिति च स्वस्य पूज्यत्वमिव पूजकत्वमपि विषयभेदनिमित्तकं महात्मनावबुद्धमस्तीति तस्य गौरवं दाक्षिण्यविशेषं च गमयति । अत्र वैकुण्ठादिनिजधाम त्यक्त्वा भूमौ अवतीर्य कृपाकटाक्षेण भक्ताननुगृह्णानस्य भक्तवत्सलस्य विष्णोर्वृत्तान्तो व्यज्यते । तत्सादृश्यं च महात्मन इति भावः ॥

परिपावनभारतश्रिया पुरतो दत्तदृशा सुरक्षितम् ।
ददृशुः क्षितिचक्रवर्तिनं परितस्तावदहिंसया वृतम् ॥ ६२ ॥

महात्मागमनं यथादृष्टस्वभावमत्र पञ्चभिः पद्यैर्वर्ण्यते, परिपावनेत्यादिभिः ॥ पुरतः = पुरोभागे, दत्तदृशा = दत्ता-न्यस्ता दृक्-दृष्टिः यया तथाविधया, परिपावनभारतश्रिया = परिपावनया-प्रशान्तधार्मिकाचारनिर्मलया, भारत (इन्त्या) महीलक्ष्म्या भारतीयपुरुषकारदेवतयेत्यर्थः । सुरक्षितं = सम्यक् पालितं । अहिंसया = तदाख्यतत्त्वसंस्कारबलेन । परितः तावत् = पृष्ठतः पार्श्वतः सर्वत्र च । वृतं = वेष्टितं । क्षितिचक्रवर्तिनं = क्षितौ सर्वत्र प्रशमोपायसिद्धये प्राणान् धारयतस्तस्य चक्रवर्तिपदमभ्युपगतम् । तं महात्मानमिति शेषः । मण्डपस्था अपश्यन्नित्यर्थः । अस्य चक्रवर्तिनो बहिरङ्गरक्षार्थं सर्वे भारतीयाः पुरतो यान्ति; अहिंसादिना सात्त्विकेन बलेन च स्वयं रक्षित एवेत्यतः न कोऽपि स्वाङ्गरक्षकः पुरुषो नियुक्तोऽस्तीत्यर्थो गम्यते ॥

मधुरस्मितसुन्दराननं कृतसिन्दूरविशेषकालिकम् ।
"मनु"ना च त"याव"या धृतोभयपार्श्वं करुणार्द्रलोचनम् ॥

अत्र चतुर्षु पद्येषु निबद्धानि द्वितीयान्तानि पदानि अन्तिमेन "तं" इति पदेन विशेषणतयनुयन्ति । मधुरेति ॥ मधुरस्मितसुन्दराननं = मधुरेण—मनोहरेण, स्मितेन—मन्दहासेन, सुन्दरं—चारु, आननं—मुखं यस्य तं । कृतसिन्दूरविशेषकालिकं = कृतं सिन्दूरमयं विशेषकं—तिलकं यस्मिंस्तथाविधं अलिकं—ललाटं यस्य तं । मनुना = 'मनु' गान्धीति प्रसिद्धया महात्मनः स्नुषया । तथा आवया = "आवा" गान्धीति ख्यातया वध्वा च, धृतोभयपार्श्वं = धृते—गृहीते उभयपार्श्वे वामदक्षिणबाहुभागौ (आवया-वामः, मनुगान्ध्या दक्षिणश्च पार्श्वोगृहीत इति यस्तु) यस्य तं । करुणार्द्रलोचनं = कृपामसृणेक्षणम् ॥

नवसप्ततिवर्षवृद्धमप्यनतिक्षीणविकस्वरौजसम् ।
बहुकार्यनिविष्टबुद्धिमप्यवधानातिशयाढ्यमानसम् ॥ ६४ ॥

नवसप्ततीति ॥ नवसप्ततिवर्षवृद्धमपि = नवाधिकसप्ततिसंख्याकैः वर्षैः, वृद्धं—स्थविरं अपि । अनतिक्षीणविकस्वरौजसं = अनतिक्षीणं-क्षयाधिक्यरहितं, विकस्वरं-विकसनशीलं, ओजः-शरीरधातूनां तेजः यस्य तं । वार्धक्येपि तेजसः स्फूर्तिः सात्त्विकाहारस्य चित्तप्रसादस्य च फलमिति ज्ञेयम् । बहुकार्यनिविष्टबुद्धिमपि = बहुषु कर्तव्येषु, निविष्टा—प्रविष्टा, बुद्धिर्यस्य तं । तथापि, अवधानातिशयाढ्यमानसं = अवधानस्य-समाधानस्य, अतिशयः-उत्कर्षः, ग्रहणधारणादिषु बुद्धिकर्मसु असाधारणं सामर्थ्यमित्यर्थः । तेन आढ्य—संपन्नं, मानसं—मनः, यस्य तं । कार्यबाहुल्येपि तस्य स्वाभाविकी बुद्धिशक्तिर्न हीयत इति सत्त्वसंपदेव गम्यते ॥

विवृतावृतमध्यहृत्तटश्लथसक्तावरणोत्तरच्छदम् ।
चिरसंस्तुतरामकीर्तनप्रवणाकम्पितदन्तवाससम् ॥ ६५ ॥

विवृतेति ॥ विवृतावृतमध्यहृत्तटश्लथसक्तावरणोत्तरच्छदं = क्वचिद्विवृतं, क्वचित् आवृतं च मध्यं यस्य तथाविधे, हृत्तटे—हृदयतले, श्लथं—शिथिलं यथा तथा सक्तः संबद्धः आवरणार्थक उत्तरच्छदः उत्तरीयं यस्य तं । चिरसंस्तुतरामकीर्तनप्रवणाकम्पितदन्तवाससं = चिरात् संस्तुतं-अभ्यस्तं, रामकीर्तनं-"राम राम" इति नामोच्चारणं । तत्र प्रवणे-प्रवृत्ते अत एवाकम्पिते ईषच्चालिते, दन्तवाससी—दन्तच्छदौ येन तथाविधं । रामनामकीर्तनं हि महात्मनो नित्यव्रतमेव ॥

अविशङ्कमवाप्तवेदिकातलसोपानतृतीयपद्धतिम् ।
तमवेक्ष्य जना जयारवं कृतवन्तोऽञ्जलिबन्धबन्धुरम् ॥ ६६ ॥

अविशङ्क = विशङ्का—आशङ्का । तद्रहितं यथा भवति तथा । सर्वेषु स्वकीयत्वबुध्यारूढो विस्रम्भोऽनेन व्यज्यते । अवाप्तवेदिकातलसोपानतृतीयपद्धतिं = अवाप्ता—प्राप्ता, वेदिकातलस्य—प्रार्थनवेदिप्रदेशस्य, सोपानं-आरोहणस्थानं, तस्य तृतीया पद्धतिः-पङ्क्तिः येन तथाभूतं, तं महात्मानं । अवेक्ष्य = दृष्ट्वा, जनाः = मण्डपस्थिताः । अञ्जलिबन्धबन्धुरं = अञ्जलिबन्धेन रम्यं, जयारवं = जयघोषं, कृतवन्तः, अञ्जलिं बध्वा "महात्मगान्धि की जय्" इत्यकीर्तयन्नित्यर्थः ॥

प्रमदात्ययमूर्च्छिते जने समभावापहृताखिलेन्द्रिये ।
फलितावसरः कलिद्रुमः किल कश्चित् खलराडुपागमत् ॥ ६७

अवसरेऽस्मिन् पापमूर्तिं तं घातुकापशदमत्रावतारयति—प्रम-

दात्ययेति ॥ जने=प्रार्थनसभासमवेते जनसङ्घे । प्रमदात्यय-मूर्च्छिते=प्रमदस्य—महात्मसान्निध्यजन्यस्याह्लादस्य, अत्ययेन—आधिक्येन, क्रमातीतेनेत्यर्थः, मूर्च्छिते—मोहिते, स्थलकालादि-स्मृतिनाशाद्विवशीकृते इत्यर्थः । स्पृहणीयोपि हर्षस्तावदतिभूमिं गतः प्रज्ञाप-राधाय कल्पत इति व्यज्यते । प्रमदात्ययशब्देन प्रकृष्ट उत्कटो मदस्यात्यय इत्यर्थोपि बुध्यते । मद्यपानादिभिर्जायमानो मदात्ययरोगः प्रसिद्धः । तस्य हि धीधृतिस्मृतिविभ्रंशो हिताहित-विशेषग्रहणासामर्थ्यं च लिङ्गम् । तद्वत् प्रमदात्ययविमूढतयात्र जनैर्विपत्तिद्वारमपावृतं न प्रबुद्धमिति भावः । नवीन भारतराज्य-धर्मेषु मद्यपाननिरोधपरो नियमः सुतरां समादरणीय इत्यनेन सूचितं भवति । समभावापहृताखिलेन्द्रिये=समभावेन—समेन मनोविकारेण, महात्मसान्निध्यलाभजन्यया कृतार्थतयेत्यर्थः । अप-हृतानि-वशीकृतानि, अखिलेन्द्रियाणि-चक्षुरादीनि यस्य तस्मिंश्च सति, अन्तःकरणस्य चक्षुरादीन्द्रियाणां च तदा महात्मसरूपग्रहण-मात्रे विश्रान्तत्वात्तत्र स्थितानामितरच्छद्मवेषग्रस्तरूपग्रहणे नाभूत् सामर्थ्यमिति भावः । आदरणीयोपि समभावः अस्थाने प्रवृत्तो-नर्थायैवेति व्यञ्जितं भवति । कलितावसरः=स्वकार्यसिद्ध्यनुकू-लोयमवसर इति कृतविस्रंभः कलिद्रुमः किल=लोकधर्मपरिष्क-रणप्रवृत्तेषु सज्जनेषु दोषप्रख्यापनपूर्वं कलहायमान उन्मत्तोयं भूता-वासत्वाद्वर्जनीयः "कलिद्रुम" एवेत्यभेदारोपः । किलेति प्रसिद्धौ । कश्चित्=अविदितव्यवहार इत्यर्थः । खलराट्=खलानां—मूर्खा-णामग्रेसरः, उपागमत्=महात्मनः समीपदेशमागच्छत् ॥

उपहस्तचतुष्टयान्तरं प्रभुवामेतरपार्श्वमास्थितः ।
अभिवन्द्य सगद्गदस्वरं किमपीत्थं स जगाद निष्ठुरः ॥ ६८ ॥

उपहस्तचतुष्टयान्तरं = किञ्चिदूनहस्तचतुष्टयप्रमाणं अन्तरं—अवकाशो यस्येति पार्श्वदेशविशेषणं । "प्रकोष्ठे विस्तृतकरे हस्तः" इति तन्मानम् । तथाभूतं प्रभुवामेतरपार्श्वं = प्रभोर्महात्मनः, वामेतरं—दक्षिणं, पार्श्वं—पार्श्वदेशं, आस्थितः—अधिष्ठितः सन्, अभिवन्द्य = अञ्जलिबन्धपूर्वकं नत्वा, सगद्गदस्वरं = गद्गदस्खलितेन स्वरेण, सः निष्ठुरः = क्रूरात्मा, किमपि इत्थं = किञ्चिद्वक्ष्यमाण-प्रकारेण, जगाद = अब्रवीत् । इदं वस्तुगतमेव । सगद्गदस्वरमित्युक्त्या चिकीर्षितस्य क्रूरकर्मणः क्रियमाणस्याभिवन्दनस्य चात्यन्तं विसदृशत्वमस्यान्तरात्मनि स्फुरितमिति द्योतितं भवति ॥

ननु बाप्पुजिना विलम्बितं किमपि प्रार्थनमण्डपागमे ।
द्रुतमुत्तरितं महात्मना "समभूदद्य तथे"ति सस्मितम् ॥६९॥

तदेववचनमाह, नन्विति ॥ ननु = सुकुमारमेतत्संबोधनं, "बाप्पुजि"ना = बाप्पुजीति हिन्दिभाषायां गुरुजनाभिधानं सांप्रदायिकं, तेन प्रार्थनमण्डपागमे = मण्डपप्राप्तौ, किमपि = किञ्चित्, विलम्बितं = विलम्बः कृत इति प्रश्नार्थकः काकुः । महात्मना, सस्मितं = मन्दहासं कृत्वा शङ्काहीनं सविस्रंभं चेति भावः । द्रुतं = जवेन, उत्तरितं = उत्तरं दत्तम् । कथमित्युच्यते । अद्य = अस्मिन् दिने, तथा = भवदुक्तप्रकारेण, समभूत् = विलम्बो जात इत्यर्थः । वस्तुतस्तुतत्क्षणागतेन "वल्लभभायि पटेल" महाशयेन सह मिथः किमपि भाषणमवश्यं कर्तव्यमासीदित्येव विलम्बहेतुः अत्रौपचारिकः प्रश्नः तदनुरूपं च प्रतिवचनमिति ज्ञेयम् ॥

इदमन्तरमाप्य दुर्मतिः स निगूढं, नलिकास्त्रमाददे ।
निचखान च गोलकत्रयं जठरे चैकमथास्य वक्षसि ॥ ७० ॥

घातुकस्य क्रूरतमं तत् सर्वमर्मभेदकं कर्मात्र प्रतिपाद्यते, इद-मिति ॥ दुर्मति॰=दुष्टबुद्धि॰। स इद अन्तर=पूर्वोक्तप्रश्नप्रति-वचनक्रियापरिच्छिन्नमवकाश। आप्य=स्वकर्मानुकूलतया गृहीत्वा। निगूढं=स्वकञ्चुकस्य कोटरे प्रागेव गुप्त। नलिकास्त्र=लोहगोल-कप्रक्षेपकं नलिकारूपमस्त्र। आदधे=करे गृहीतवानित्यर्थ। किंच, अस्य=महात्मन। जठरे=उदरदेशे। गोलकद्वय=लोहगुलिका-द्वय। अथ तदनन्तर। वक्षसि हृदयस्थाने। एकं गोलक, निच-खान=निक्षिप्तवान्। गोलकत्रयमेवं त्रिवार प्रक्षिप्य स्थानत्रय-दारणं कृतमितीदमपि वस्तुवृत्तम् ॥

सहसा गुरुसाध्वसाहतक्षतमस्तिष्कतया जडीकृतम् ।
जनताहृदयं नभश्च तत् घनहाहारवपूरितान्तरम् ॥ ७१ ॥

तदा तत्र किं सवृत्तमित्याह, सहसेति ॥ सहसा=तत्क्षण गुरुसाध्वसाहतक्षतमस्तिष्कतया=गुरुणा—महता, साध्वसेन—भयेन, आहत-अभिहत, क्षत-भिन्न, मस्तिष्कं-मस्तुलुङ्ग, बुद्धेः स्थान येषा ते तथात्वेन। भयाधिक्यान्मस्तिष्कसमवेतासु सिरासु रक्तसम्मर्दस्तेन तद्भेदस्तत इन्द्रियध्वंसोपीति वैद्यक्रम। जनता-हृदयं=जनसमूहस्य हृदयं, जडीकृतं=अचेतन निर्व्यापारमिव च कृतमित्यर्थ। तत् नभश्च=तन्मण्डपावच्छिन्नमन्तरिक्ष च। घन-हाहारवपूरितान्तर=घनेन—निबिडेन, हाहारवेण—हाहेत्याक्रन्द-नशब्देन, पूरित-आध्मातं स्तब्धमित्यर्थ, अन्तर-अन्तर्भाग यस्य तथा जडीकृतमेव। क्षणं जना कर्तव्यमूढा एव हाहारव चक्रुरिति भाव ॥

किमिद धिगिति क्षतक्षरद्रुधिरं वीक्ष्य ततश्च तद्वपुः ।
रुदितं पतितं च मूर्च्छितं मनुगान्ध्यापरया जनैः समम् ॥ ७२

किमिदमिति ॥ ततश्च = तदनन्तरं च । क्षतक्षरद्रुधिरं = क्षतेभ्यः व्रणेभ्यः, क्षरत्—स्रवत्, रुधिरं—शोणितं यस्य तत् । तद्वपुः = तस्य गात्रं, वीक्ष्य = दृष्ट्वा, किमिदं धिगिति = इदं किं इति धिक् इति च उक्त्वेति शेषः अत्यन्तमतर्कितत्वात् निन्दनीयत्वाच्च वीक्षणक्षणोद्बुद्धमाक्षेपवचनमेतत् । मनुगान्ध्या = पूर्वोक्तया महात्मनः स्नुषया । अपरया = चशब्दोत्राध्याहर्तव्यः आद्या गान्ध्या । गान्धिशब्दोत्र स्त्रीवाचकत्वात्तल्लिङ्गः प्रयुक्तः । उभयपार्श्वावलम्बिनीभ्यां ताभ्यां. जनैः = मण्डपस्थैः, समं = सह रुदितं पतितं चेति भावेक्तः । सर्वैस्तै रोदनादि कृतमिति भावः ॥

निहतः स च पृष्ठतः पतन् क्षणमाबध्य महार्घमञ्जलिम् ।
जनसेवनमीश्वरार्चनं परतोप्यस्तु ममेत्यशंसत ॥ ७३ ॥

निहतः = तथानिहतः । स महात्मा च, पृष्ठतः पतन् = पश्चात् पतन् । क्षणं = अल्पे समये, महार्घं = महामूल्यं, अखिलाहतत्वादनन्तरालभ्यत्वाच्च । अञ्जलिं आबध्य = अञ्जलिबन्धनं कृत्वा । मम, जनसेवनं—जनानां अविशेषेण सर्वेषां योगक्षेमार्थः प्रयत्नः । ईश्वरार्चनं = ईश्वरपूजनं च । परतः अपि अस्तु = परलोकेपि तत् सुकरं भवतु, इति = एवं, अशंसत = आशंसितवान् । लोकक्षेमार्थं जीवधारणं कुर्वतो महात्मनः सेवकत्वं सेव्यस्य कल्याणाय केवलं भवति, न तु स्वस्य । ततस्तत्कृतस्याञ्जलिबन्धस्य महार्घत्वम् । पतनसमये कृतोयमञ्जलिबन्धः वस्तुगत एव । तस्य जनसेवनाद्यभिप्रायकत्वं तु औचित्यात् कल्पितम् ॥

नलिकास्त्रविदीर्णवक्षसं बत "हा रामि"ति कम्पिताधरम् ।
निपतन्तमनन्तसत्त्वमन्वपतद्भूस्तनुराश्रया सती ॥ ७४ ॥

नलिकास्त्रविदीर्णवक्षसं = नलिकास्त्रेण विदीर्णं वक्षो—हृदय-स्थानं यस्य तं, वत = हन्त! "हा राम" इति = हृदयव्यथायामपि रामनामोच्चारणं कृत्वा। कम्पिताधरं = चलिताधरं। अनन्तसत्त्वं = अनन्तं—अविनाशि सत्त्वं मनोबलं यस्य. अनन्तस्य शेषस्येव सत्त्वं-भूभारवहनसामर्थ्यं यस्येति च। तथाविधं, निपतन्तं = पतनक्रिया-नुकूलचेष्टाश्रयभूतं। तं = महात्मानं, अनु = पश्चात्, भूः = भूलोकः, भूमिरेव च। अनुपाश्रया सती = निरालम्बा भूत्वा। अपतत् = पपात। लोकक्षेमधूर्वहस्य तस्य पतने लोकस्यापि निपातोऽभवदिति भावः। अनन्ताख्येन शेषेणाचलमिव्रता भूमिस्तत्पतने यथावश्यं पतति तथेतिश्लेषेण तत्साहृदयमुक्तं भवति। सतीति पतिव्रता-वाचकशब्देन भुवो विशेषणं तस्या भर्त्रा सह पतनवर्णनं च भारत-भूमेः महात्मनः पत्नीत्वं परिकल्प्यवक्ष्यमाणमर्थमासूत्रयति। पत-नावसरे "हा राम" इति वचनं वस्तुगतमेव। इदं चात्रानुसन्धे-यम्। यथा—"तथानिपतितमपक्षीयमाणहृदयस्पन्दमनुत्क्रान्त-चरमप्राणवर्गं महात्मनदशरीरं प्रार्थनमण्डपात्स्ववासस्थानमनायि; नव्यभैषज्यकलाविदग्धैरुपचरितम्; पादोनषष्ठघण्टायामेव विर-तस्पन्दं जातमिति, प्रातकालमौर्ध्वदेहिकं कर्म च महार्हेणानर्घेण च संविधानेन निर्वर्तितं चेति"॥

ठगितिस्फुटितोद्धतध्वनिश्रवणत्रस्तविघूर्णकन्धरा।
भरतक्षितिदेवता तु "हा धिगि"ति प्रेक्ष्य पपात मूर्च्छिता॥

"अत्याहितं, अत्याहितं, अहो महात्मा हतः, गान्धी निहतः, हा हतः स" इत्यादिभिर्भयशोकमूर्च्छाविस्फुरितैः सर्वतः समु-त्थितैराक्रन्दनध्वनिभिर्भारतमण्डलस्यान्तरिक्षं भूकम्पेनेवाभ्रपर्वत-स्फुटनेनेव प्रलयघनगर्जनेनेव च क्षोभितं चकितं च जातमिति

वर्णनीयमर्थजालं भरतक्षितिदेवतामुपाधित्वेन गृहीत्वा तच्चेष्टादि-रूपेण प्रकाशयति । जडानामपि देवतात्मकत्वोल्लेखनेन सचेतनत्वकल्पनं मनुष्यसाधारणस्तद्व्यवहारश्च सारस्वतसर्गे शोभावह इति सम्प्रदायोऽत्रावलम्बितः। ठगितीत्यादिना॥ भरतक्षितिदेवता तु= ६२ तमे पद्ये महात्मनोऽङ्गरक्षकस्थाने यस्याः पुरस्ताद्गमनं वर्णितं सा, भरतक्षितेः=भरतभुवो, देवता—अधिष्ठानदेवता, सर्वभावेनाभिव्याप्यस्थिता जीवशक्तिः । व्यवहारसाक्षिरूपं तदधिष्ठानं, कर्तृत्वाद्यभिमानविशिष्टोऽहङ्कारश्चात्र देवतापदार्थत्वरूढः ज्ञेयः । ततश्च देवतासंबन्धेनात्र प्रस्तूयमानो वृत्तान्तः भारतीयजनसामान्यमाश्रयत्वेन विषयत्वेन च संबध्नातीत्यवसेयम् । ठगितिस्फुटितोद्धत-ध्वनिश्रवणत्रस्तविवृत्तकन्धरा=ठक् इति उच्चैः स्फुटितस्य—प्रभिन्नस्य, उद्धतस्य—उच्चैरुत्थितस्य, ध्वनेः—नलिकास्त्राभिघातशब्दस्य, श्रवणेन—आकर्णनेन, त्रस्ता—स्वयं चकिता, विवृत्ता—परावृत्ता, च कन्धरा—ग्रीवा, यस्यास्तथाभूता सती । प्रेक्ष्य=आलोक्य । इदमेवंविधमिति विज्ञानात् प्रागेवेति प्रेक्षणकर्मानुल्लेखनेन द्योत्यते । "हा धिक्"=कष्टं! निन्द्यं च इति=उक्त्वेति शेषः । मूर्च्छिता =बोधहीना । पपात=अपतत् आश्रयविषयादि विज्ञाननिरपेक्षमुत्थितया मूर्च्छया तस्यावस्थान्तरस्य तीव्रतमोद्वेगकारित्वं व्यज्जितं भवति ॥

असमञ्जसमञ्जसा करे निगृहीतं नलिकास्त्रभीषणे ।
पुरुषोत्तमघातुकं ततः शबरं सा पुरतस्त्वमैक्षत ॥ ७६ ॥

ततः मूर्च्छापगमानन्तरं । सा=भारतदेवता । नलिकास्त्रभीषणे=नलिकास्त्रेण तत्संबन्धेनेत्यर्थः, भीषणे—भयजनके, करे=हस्ते, अञ्जसा=तत्क्षणे, निगृहीतं=बलाद्गृहीत्वा निरुद्धमित्यर्थः ।

त्वस्येत्यर्थः, व्यतिरेकः—वैपरीत्यं, अधमत्वमित्यर्थः, यस्य तथाविधं, इदं तव मस्तकं=एतत्ते शिर इति उत्तरश्लोकस्थविशेषणैः सहान्वयः। पापिनां तदनुरूपो निन्द्यश्चाकारः प्रायोभवतीति स्वभाव एवं वर्णितः॥

विषगर्भितवह्निगोलकं कलिसम्मानितकालकन्दुकम्।
प्रसवानिलघट्टितं न हि स्फुटितं हन्त जगद्विपत्तये ॥ ८० ॥

विषेति॥ विषगर्भितवह्निगोलकं=विषेण—मृतिकरौषधेन, गर्भितं—अन्तःपूरितं, वह्निगोलकं—अग्निविकिरणार्थकं गोलकं। कलिसम्मानितकालकन्दुकं=संहारयुगदेवतया सम्मानितं—बहुमानेन दत्तं, कालस्य—अन्तकस्य, कन्दुकं—क्रीडासाधनविशेषः। स्वकर्तव्ये संहारकर्मणि सहायभूताय कालाय सन्तुष्टेन कलिना दत्तमित्यर्थः, हिंसानुकूलदुर्वासनासम्पन्नमिति भावः। तव मस्तकं=इति पूर्वेणान्वयः। प्रसवानिलघट्टितं=प्रसवार्थं प्रवृत्तेन सूतिकानिलेन घट्टित—उत्पीडितं, गर्भाशयाद्भूपतनावसरे इत्यर्थः। जगद्विपत्तये=जगतो—लोकस्य, विपत्तिः विध्वंसः तस्यै न हि स्फुटितं=न खलु विभिन्नं, हन्त=इत्यनुतापे। पापपूर्णस्यापि शिरसो निरपायं जन्म तस्य चैवं लोकविपत्करं फलमितीश्वरेच्छा बलीयसीति भावः॥

गुरुपातकपिण्डदुर्भरं यदनिर्वापिततीव्रचेतनम्।
इह वामन! ते शिरश्चिरात् बलिना पादशतेन ताड्यताम्॥

इदमपि तच्छिरसो भर्त्सनं, गुरुपातकेति॥ गुरुपातकपिण्डदुर्भरं=गुरुणा—घनेन, पातकस्य—पापस्य पिण्डेन अन्तर्गतार्बुदग्रन्थिरूपेण, दुर्भरं—धर्तुमशक्यं। अनिर्वापिततीव्रचेतनं=अनिर्वापिता—अप्रनाशिता, तीव्रा—तीक्ष्णा, चेतना—बुद्धिः यस्मिन्

प्रयुद्धमस्तिष्कव्यापारकमित्यर्थः । यत् ते शिरः=योयं तव मूर्धा सः, इह=अस्मिन् मण्डपवेदिकायामेव, हे वामन!=ह्रस्वगात्र! इदं च निन्द्यतालिङ्गम् । बलिना=बलवता, पादशतेन=शतशः प्रयुक्तैर्बहूनां पादाघातैः । ताड्यतां=अहन्यतां कन्दुकत्वारोपो दुर्भरपिण्डत्वारोपश्च मूर्ध्नः पादाहतिक्रीडायोग्यतां व्यनक्ति । पुरा पादत्रयविक्षेपेण वामनो महाबलेर्मूर्धानमपीडयदित्याख्यायते । इदानीं तु महाबलिरनेकैः पादाघातैर्वामनस्य शिरस्ताडयेदित्यर्थः शब्दशक्त्यावगम्यते । हरेरपि स्वदुष्कर्मफलानुभवो दुर्निवारः, किमु वक्तव्यं मनुजानामिति प्रकृतार्थेनास्य संबन्धो ज्ञेयः ॥

उदरे कुलधूमकेतुमुत्कटपापं दधती निशाचरम् ।
जननी, तव सूतिकागृहं प्रविशन्ती बत किं न संस्थिता ॥ ८२

उदर इति ॥ कुलधूमकेतुं=वंशनाशकमुत्पातभूतं । उत्कट-पापं=उद्रिक्तपापमूर्तिं । निशाचरं=राक्षसं त्वामिति शेषः । उदरे =जठरे, दधती वहन्ती । तव जननी=त्वन्माता । सूतिकागृहं= प्रसवालयं । प्रविशन्ती=गच्छन्ती । किं न संस्थिता=कुतो वा न मृता, बतेतिखेदे । गर्भस्य पापवैभवेन प्रसवपूर्वक्षणे माता यदि निहन्यते तर्हि तदेववरमित्याशयः। विधिना तथा न कृतमिति खेदः॥

वनिताधनमानकामिषु प्रतिपक्षप्रतिपत्तिजृम्भितः ।
कलहः, कलिवैभवात्, क्वचिन्महतोऽप्यापदि पर्यवस्यति ॥ ८३

चित्तविक्षेपो हि परां काष्ठां गतश्चिरं नावतिष्ठते । अतोऽत्र जातोद्वेगचिन्तावसर इति तथा वर्ण्यते, वनितेति ॥ वनिताधन-मानकामिषु=वनितां धनं मानं च कामयमानेषु जनेषु । प्रतिपक्ष-प्रतिपत्तिजृम्भितः=प्रतिपक्षस्य—स्वविरोधिनः, प्रतिपत्तिः ज्ञानं

द्रुतमागत्य विरलातपकिङ्करः कश्चित्तं तथा न्यरौत्सीदितिवस्तुगतम् । असमञ्जसं=दुराचारं । पुरुषोत्तमघातुकं=पुरुषोत्तमस्य महात्मनः भगवतः श्रीकृष्णस्य च, घातुकं=हन्तारं । तं शबरं=व्याधसदृशं तं, व्याधमेव च, पुरतः, ऐक्षत=अपश्यत् । यथा शबरः कश्चित् पुरा भगवन्तमनाततायिनमस्त्रेण जघान तथायं महात्मानमपीति सादृश्यं बोध्यम् ॥

अथ दुःसहरोषभीषणभ्रुकुटित्रासितलोकलोचना ।
शप, तर्जय, भर्त्सयेति सा भृशमाक्रुक्षदरुन्तुदाक्षरम् ॥७७॥

अथ ईक्षणानन्तरं, सा=भारतदेवी, दुःसहरोषभीषणभ्रुकुटित्रासितलोकलोचना=दुःसहेन, रोषेण—क्रोधेन, भीषणया—भयप्रदया, भ्रुकुट्या—भ्रुकुटिः ललाटभ्रूसङ्कोचनादिकृतः क्रूरो मुखविकारः, तेन त्रासितानि—भयप्रकम्पितानि, लोकानां पश्यतामित्यर्थः, लोचनानि—ईक्षणानि यया तथाविधा भूत्वा । शप, तर्जय, भर्त्सय इति शापं, तर्जनं, भर्त्सनं च कुर्वन्ती । अरुन्तुदाक्षरं—मर्मभेदकाक्षरमयं यथा तथा । तं=समुद्दिश्येत्यर्थः । आक्रुक्षत्=उपक्रोशनमकरोत् । शापादिभिस्तमगर्हयदिति भावः ॥

नरकागमसिद्धराक्षसव्रतदीक्षान्तनितान्तदर्पितः ।
म्रियसे खल ! ते शिरः पतेत् सपदीरम्मदवह्निपातितम् ॥ ७

तमेव शापादिप्रकारमाह द्वादशभिः नरकेत्यादिभिः । नरकागमसिद्धराक्षसव्रतदीक्षान्तनितान्तदर्पितः=नरकप्राप्तिहेतुर्हिंसादिकं ये स्वधर्मं पश्यन्ति तेषां समय एवात्र नरकागम इत्युच्यते । तत्र सिद्धं=प्रसिद्धं, राक्षसव्रतं—रक्षसामुचितं प्रियं च हिंसाप्रधानं व्रतं—नियमः तस्य दीक्षा—गुरूपस्थानमारभ्य मुख्ययज्ञपर्यन्तेषु

कर्मसु क्रमेण प्रवृत्तिः, तस्या अन्तः—अन्त्यं कर्म, सर्वदोषपरिहारपूर्वकं व्रतस्य पूरणं तेन नितान्तदर्पितः—अनन्यसाध्यो महाफलश्च गान्धिवधात्मको मे यज्ञः सम्प्रति सम्पूर्णः इति महताहङ्कारेण समुद्धतः। त्वं हे खल! मूर्ख! ध्रियसे = अवतिष्ठसे। अद्यापि जीवसीति काकुः। ते शिरः = तव मूर्धा, इरम्मदवह्निपाटितं = मेघज्योतीरूपेण वह्निना विदारितं सत्। सपदि पतेत् = द्राक् भूमौ पतिष्यति। वज्रपातेन स्फुटितस्ते मूर्धा पततु इति शापः। अत्र, राष्ट्रियस्वातन्त्र्यसिद्ध्यर्थं, वेदशास्त्रविधिलङ्घनेन चण्डालद्विजाद्येकीकरणं, मोहम्मदादिमतान्तरीयप्रसादनाय हैन्दवानामनेकवैशसानुभवस्तथाविधं बहुमुखं सनातनधर्मप्रतिकूलमुपदिशति, करोति, कारयति चायं महात्मेति चिराज्जातं केषाञ्चिद्विरोधो, वैरस्य, प्रतिकारेच्छा च सम्भूयान्तर्विवृद्धं परिणतमेव महात्मनो वधाय कर्मणि नृशंसमचोदयदिति भारते सर्वत्र प्रवृत्तावस्तुगतिः राक्षसव्रतदीक्षारूपेण व्यञ्जिता॥

इदमुन्मदसर्पवीक्षणं नतघोणं तनुलोम धूसरम्।
तव मस्तकमुत्तमाङ्गताव्यतिरेकं यदुलूकदुर्भगम् ॥ ७९ ॥

मूर्ध्नः पातो विकृताकारत्वेनापि युक्त एवेति प्रदर्शयति। इदमुन्मदेति॥ उन्मदसर्पवीक्षणं = उन्मदस्य—क्षुभितस्य, सर्पस्य फणिनो वीक्षणमिव दर्शनमिव वीक्षणं—दर्शनं यस्य तत् भीषणत्वादिति भावः। नतघोणं = नता नम्रा, घोणा नासा, यस्य तत्। तनुलोम = तनूनि सङ्ख्यया रूपेण च स्वल्पानि लोमानि यस्य तत्। धूसरं = गर्दभस्येव धूम्रवर्णं। यत् उलूकदुर्भगं = उलूकस्य कौशिकस्य, शिर इवेत्यर्थः, दुर्भगं—निन्द्याकारं। उत्तमाङ्गताव्यतिरेकं = उत्तम—श्रेष्ठं, अङ्ग—अवयवः तस्य भावस्तत्ता, तस्या उत्तमाङ्ग-

त्वस्येत्यर्थः, व्यतिरेकः—वैपरीत्यं, अधमत्वमित्यर्थः, यस्य तथाविधं, इदं तव मस्तकं = एतत्ते शिर इति उत्तरश्लोकस्थविशेषणैः सहान्वयः। पापिनां तदनुरूपो निन्द्यश्चाकारः प्रायोभवतीति स्वभाव एवं वर्णितः॥

विषगर्भितवह्निगोलकं कलिसम्मानितकालकन्दुकम्।
प्रसवानिलघट्टितं न हि स्फुटितं हन्त जगद्विपत्तये ॥ ८० ॥

विषेति॥ विषगर्भितवह्निगोलकं = विषेण—मृतिकरौषधेन, गर्भितं—अन्तःपूरितं, वह्निगोलकं—अग्निविकिरणार्थकं गोलकं। कलिसम्मानितकालकन्दुकं = संहारयुगदेवतया सम्मानितं—बहुमानेन दत्तं, कालस्य—अन्तकस्य, कन्दुकं—क्रीडासाधनविशेषः। स्वकर्तव्ये संहारकर्मणि सहायभूताय कालाय सन्तुष्टेन कलिना दत्तमित्यर्थः, हिंसानुकूलदुर्वासनासम्पन्नमिति भावः। तव मस्तकं = इति पूर्वेणान्वयः। प्रसवानिलघट्टितं = प्रसवार्थं प्रवृत्तेन सूतिकानिलेन घट्टित—उत्पीडितं, गर्भाशयाद्भूपतनावसरे इत्यर्थः। जगद्विपत्तये = जगतो-लोकस्य, विपत्तिः विध्वंसः तस्मै न हि स्फुटितं = न खलु विभिन्नं, हन्त = इत्यनुतापे। पापपूर्णस्यापि शिरसो निरपायं जन्म तस्य चैवं लोकविपत्करं फलमितीश्वरेच्छा बलीयसीति भावः॥

गुरुपातकपिण्डदुर्भरं यदनिर्वापिततीव्रचेतनम्।
इह वामन! ते शिरश्चिरात् बलिना पादशतेन ताड्यताम्॥

इदमपि तच्छिरसो भर्त्सनं, गुरुपातकेति॥ गुरुपातकपिण्डदुर्भरं = गुरुणा—घनेन, पातकस्य—पापस्य पिण्डेन अन्तर्गतार्बुदग्रन्थिरूपेण, दुर्भरं—धर्तुमशक्यं। अनिर्वापिततीव्रचेतनं = अनिर्वापिता—अप्रनाशिता, तीव्रा—तीक्ष्णा, चेतना—बुद्धिः यस्मिन्

प्रयुद्धमस्तिष्कव्यापारकमित्यर्थः । यत् ते शिरः=योयं तव मूर्धा सः, इह=अस्मिन् मण्डपवेदिकायामेव, हे वामन!=ह्रस्वगात्र! इदं च निन्द्यतालिङ्गम् । बलिना=बलवता, पादशतेन=शतशः प्रयुक्तैर्बहूनां पादघातैः । ताड्यतां=अहन्यतां कन्दुकत्वारोपो दुर्भरपिण्डत्वारोपश्च मूर्ध्नः पादाहतिक्रीडायोग्यतां व्यनक्ति । पुरा पादत्रयविक्षेपेण वामनो महाबलेर्मूर्धानमपीडयदित्याख्यायते । इदानीं तु महाबलिरनेकैः पादाघातैर्वामनस्य शिरस्ताडयेदित्यर्थः शब्दशक्त्यागम्यते । हरेरपि स्वदुष्कर्मफलानुभवो दुर्निवारः, किमु वक्तव्यं मनुजानामिति प्रकृतार्थेनास्य संबन्धो ज्ञेयः ॥

उदरे कुलधूमकेतुमुत्कटपापं दधती निशाचरम् ।
जननी, तव सूतिकागृहं प्रविशन्ती बत किं न संस्थिता ॥ ८२

उदर इति ॥ कुलधूमकेतुं=वंशनाशकमुत्पातभूतं । उत्कट-पापं=उद्रिक्तपापमूर्तिं । निशाचरं=राक्षसं त्वामिति शेषः । उदरे =जठरे, दधती वहन्ती । तव जननी=त्वन्माता । सूतिकागृहं= प्रसवालयं । प्रविशन्ती=गच्छन्ती । किं न संस्थिता=कुतो वा न मृता, बतेतिखेदे । गर्भस्य पापवैभवेन प्रसवपूर्वक्षणे माता यदि निहन्यते तर्हि तदेववरमित्याशयः। विधिना तथा न कृतमिति खेदः॥

वनिताधनमानकामिषु प्रतिपक्षप्रतिपत्तिजृम्भितः ।
कलहः, कलिवैभवात्, क्वचिन्महतोऽप्यापदि पर्यवस्यति ॥ ८३

चित्तविक्षेपो हि परां काष्ठां गतश्चिरं नावतिष्ठते । अतोऽत्र जातोद्वेगचिन्तावसर इति तथा वर्ण्यते, वनितेति ॥ वनिताधन-मानकामिषु=वनितां धनं मानं च कामयमानेषु जनेषु । प्रतिपक्ष-प्रतिपत्तिजृम्भितः=प्रतिपक्षस्य—स्वविरोधिनः, प्रतिपत्तिः ज्ञानं

तेन जृम्भितः—प्रवृद्धः । कलहः = विग्रहः । क्वचित् = कुत्रचिद्विषये । कलिविभवात् = कलिकालमहिम्ना । महतः = महापुरुषस्यापि । आपदि = विनाशे । पर्यवस्यति = परिसमाप्यते । धनितादिहेतुके कलहे ईदृशी विपत्तिरभ्युपेयत एवेत्यर्थः ॥

न हि कश्चन हेतुरीदृशो न च वृत्तः कलहस्तथाथवा ।
तव राक्षसवेदचोदितो नरमेधः कलिदैवतो ह्ययम् ॥ ८४ ॥

न हीति ॥ ईदृश' = उक्तरूप. । कश्चन = कोपि । हेतुः बीजं । न हि न खल्वस्ति । तथा = परस्परसंघट्टनरूप. कलहः न वृत्तश्च = न प्रवृत्तश्च । कलहस्य हेतु' स्वरूप च न दृष्टमित्यर्थः । अथवा पक्षान्तरे, अय = महात्मनो वध । तव = ते । राक्षसवेदचोदितः = राक्षसागमे विहितः । हिंसनमात्रात्मकत्वात्तथा कल्पितः । कलिदैवत = कलिदेवताक , कलिप्रसादार्थक', नरमेध हि = तन्नामको यज्ञ एवेत्यर्थः । पापकर्मणि कौतुकात्त्वया कृतमिद कर्म कारणविशेष नापेक्षत इति भाव. ॥

ननु, येन समत्वदर्शिना भुवनं सर्वमहिंसया जितम् ।
मनुजाधम! साधितं त्वया किमकाण्डे तमभिघ्नता छलात् ॥

ननु मनुजाधम! = मूढ!, समत्वदर्शिना = सर्वानपि समभावेन पश्यता । येन = महात्मना । सर्वं भुवन = सर्वलोक , अहिंसया = हिंसारहितेन धर्मेण करणेन, जितं = वशीकृतं । लोकानुग्रहाय जीवन्त पूजनीयं त, छलात् = व्याजेन, अकाण्डे = कारण विना । अभिघ्नता = निगृह्णता, त्वया । किं = किं प्रयोजनं, साधितं = समार्जितमित्याक्षेपः । वध्यनिरूपितं कारणमनधिगत्य हतो वधस्तत्कर्तुरुन्मादप्रयुक्त एवेति भाव. ॥

अनिदानमदृष्टलक्षणं दुरुदर्कं च भुजङ्गदंशनम् ।

यदि तद्विषशल्यमुक्तये नियतिं धिग्यमपक्षपातिनीम् ॥ ८६ ॥

तदेव प्रकारान्तरेणाह—अनिदानमिति ॥ अनिदानं=हेतुरहितं । अदृष्टलक्षणं=अदृष्टं—अज्ञातं, लक्षणं—पूर्वरूपं यस्य तादृशं । दुरुदर्कं=दुष्ट उदर्कः—उत्तरफलं यस्य तत् असह्यानेकानर्थजनकमिति भावः । भुजङ्गदंशनं=सर्पदंशनं, तदात्मको गद इत्यर्थः । अस्यागन्तुकत्वान्निदानपूर्वरूपसंप्राप्तिग्रहणद्वारा रोगनिर्णयश्चिकित्साचिन्तनं च दुर्घटमिति भावः । एतच्च दंशनं, तद्विषशल्यमुक्तये यदि=तस्य सर्पस्य, विषशल्यं—शल्यवत् स्वदुःखजनकं स्वविषमेव, तस्य मुक्तये—विसर्जनाय भवति चेत् । परदंशनेन स्वविषमुक्तिः भुजङ्गस्याश्वासं जनयति चेदित्यर्थः । यमपक्षपातिनीं=यमस्यान्तकस्य पक्षे—सह्याये, पतति—संवध्नातीति, यमप्रियाधायिनीमित्यर्थः । नियतिं=लोकस्थितिनियामिकां प्रकृतिं । धिक्=सैवनिन्दनीयेत्यर्थः । भुजङ्गशब्दो वृथा परपीडकं खलमप्यभिधत्ते । तत्कृतं दंशनं पीडनमिति चार्थो ज्ञेयः । सर्पाः केचित् कदाचित् स्वदंष्ट्रायां सञ्चितेन विषेण पीडिताः उन्मत्ताः परदंशनेनाश्वासमर्थयन्त इति प्रसिद्धिरत्रानुसन्धेया ॥

अनवद्यममित्रदक्षिणं तदहिंसाव्रतमीश्वरेऽर्पितम् ।

हृदयं, क्व महात्मनः क्व ते व्यतिरेकोऽप्यनयोर्न मृष्यते ॥ ८७ ॥

नियतिहेतुकत्वेऽपि महात्मनो हृदयदारणकर्ता पापिष्ठो नोपेक्षणीय इति तद्धृदयमेदं परामृशति अनवद्यमिति ॥ अनवद्यं=रागद्वेषादिकृतकैतवरहितं । अमित्रदक्षिणं=अमित्रे शत्रावपि दक्षिणं—अनुकूलं, अहिंसाव्रतं=अहिंसैव व्रतं यस्य तथाविधं । ईश्वरे=सर्वनियामके समष्टिचैतन्ये । अर्पितं=कर्मफलस्येश्वरार्प-

णेन सङ्गवर्जितमित्यर्थः। एवंविधं महात्मनो हृदयं, क=कुत्र, तव हृदयं=पापपङ्किलं, क=कुत्र। उभयोर्महदन्तरमस्तीत्यर्थः। अनयोः =महात्मनस्तव च हृदययोः। व्यतिरेकः=पूज्यत्वापूज्यत्वयोर्घकं लक्षणमेदनिरूपणमपि। न मृष्यते=न क्षम्यते विवेकिभिरिति शेषः। निन्दार्थमपि त्वद्धृदयस्मरणं दुःसहमिति भावः॥

हृदयं हि महात्मगान्धिनो मम चाभिन्नमभौतिकं दृढम्।
प्रहरन्तमभिच्छिनत्ति यत्प्रतिघातो बहुजन्मभीषणः ॥ ८८ ॥

महात्महृदयस्य पूज्यत्वे हेतुविशेषमाह—हृदयं हीति॥ महात्मगान्धिनः, मम, च हृदयं, अभिन्नं=एकं, भारतीयहृदयसमष्टितादात्म्यमापन्नं नदित्यर्थः। अभौतिकं=भूतगुणानुपरुद्धं सूक्ष्मं चेतनात्मकमित्यर्थः। दृढं=बलिष्ठं अभिघातक्षमं। यत्प्रतिघातः यस्य—हृदयस्य प्रत्याघातः, आहननस्य यो वेगो दृढे लक्ष्ये प्रतिरुद्धो बलान्निवृत्त आहन्तारमभिहन्ति स एव प्रत्याघातो नाम। स बहुजन्मभीषणः=बहुषु जन्मसु भयं जनयन्। प्रहरन्तं=अभिहन्तारं, तादृशवेगारम्भकमित्यर्थः। अभिच्छिनत्ति=भिनत्ति। अयमत्र निष्कर्षः, यथा—हृदयं हि रक्तमांसादिमयं भौतिकं वस्तु। तत्र तादात्म्य संबन्धेनाभिव्याप्य स्थिता चेतनशक्तिरिति चेतनाख्यानं तदुच्यते। एवं च जडं चेतनं, स्थूलं सूक्ष्मं, व्यक्तमव्यक्तं, चेत्यादीनां द्वन्द्वधर्माणामिदमधिष्ठानं भवति। जन्मसिद्धस्तस्य भौतिक आकार आशरीरनाशमेकरूप एवावतिष्ठते। चेतनभावस्तु बाह्यैरान्तरैश्च हेतुभिर्वर्धते, हीयते, विपरिणमते च। तत्र शास्त्रज्ञानं, धर्मनिष्ठा, सत्सङ्गो, मैत्र्यादिगुणाभ्यासश्च हृदयस्य चेतनभावमुपबृंहयति; तद्वत् रागद्वेषमोहादिरूपं मालिन्यं विशोधयति च। विवृद्धे विशुद्धे चास्मिन् भावे हृदयस्य विकासप्रतिरोधको विषय-

वासनाबन्धः स्वयं भिद्यते । भिन्नसेतुबन्धश्चेतनाप्रवाहः स्वनग्न-श्चिन्मयेन स्रोतसा देशान्तरं रूपान्तरं वा गच्छति; व्यक्तिविशेषो-पाधिमतिलङ्घ्य प्रवृत्तोयमखिलव्यक्तिसाधारणमाश्रयमवाप्य सजा-तीयविजातीयस्वगतभेदशून्य सर्वान् भावानात्मनि बिभ्राणः सर्व-हृदयसायुज्यं प्राप्नोति । ज्ञानात्मिका सिद्धिरियमभ्यासेन दृढीभूता महात्मनां दिव्यत्वमीश्वरत्वं च प्रसाधयति। परिपाकहीनताप्रयुक्तः कालादिनिबन्धनश्चात्र जायमानो फलभेदस्तूणधियशाद्दुर्निवार एव॥

एवं च पूर्वोक्तसंस्कारसम्पन्न महात्मनो हृदय भारतीयसर्व-व्यक्तिहृदयमभिव्याप्य तत्संस्करणपूर्वक समान प्रयोजनमभिलक्ष्य सममेव प्रवर्तत इति, गुणेन क्रियया च समानत्वं तयोरभेदकारणं सम्पन्नमेव । अतः साधूक्त "हृदयं हि महात्मगान्धिनो मम चाभि-न्नमि"त्यादि । दृढत्वं पुनस्तस्य यलिप्तत्वादभेद्यत्वाच्चोक्तम् । परि-च्छिन्नं भौतिकं च गुणमनियर्तमानं महदेतच्चैतन्यं स्वरूपे स्थित-मभेद्यं सदा प्रत्याघातरेणप्रवर्तक चेति भावः । एतेनास्मिन् जन्मनि जन्मान्तरेषु च त्वामेष ब्रह्मराक्षसस्तर्जयेत् भीषयेदभिद्न्याचेत्युक्तं भवति ॥

तव चाघपिशाचहुंकृतैर्भृशमाध्मातनिरुद्धपीडितम् ।
हृदयं नरकोरसवध्वजोद्धरणार्थं समये स्फुटिष्यति ॥ ८९ ॥

धातुरहृदयस्य भाविनीं दशामाह—तव चेति ॥ तव हृदयं च, अघपिशाचहुंकृतैः = अघं—महात्महत्याजन्यं पापं, तदेवपिशाचो—घोरमदः, तस्य हुंकृतैः—हुंकारैः, तत्प्रयुक्तेन पातेनेत्यर्थः । भृशं = अत्यन्तं । आध्मातनिरुद्धपीडितं = आध्मातं—पूरितं, निरुद्धं—विघ्नघं, पीडितं—सम्मर्दितं च सत् । नरकोरसवध्वजोद्धरणार्थं =

नरकलोके य पापिना चित्रवधप्रदर्शनभीषण, उत्सव =प्रेतपिशाचादिसम्मेलनमहामह, तस्य ध्वजोद्धरण—पताकासमुत्थापन, तदर्थ तन्निवेदनार्थ । समये=परिणतेवसरे । स्फुटिष्यति=विभिद्येत। नरकोत्सवारम्भे मुख्य कर्म ध्वजोद्धरणात्मकमेतद्धृदयकरण्डकस्फोटनपूर्वक भवेदित्यनेन, पापस्य सर्वातिशायित्वमसह्यवेदनाजनकत्व च व्यञ्जितम् ॥

यदि गूढचरैः स रक्षितो भटकल्पैर्न भवेदिय विपत् ।
तदनिष्टमिति त्वसाम्प्रत न हित स्वादु च सर्वमौषधम् ॥९०॥

अथ किञ्चिच्छान्तरोषेव स्वकीयानामपराधं परामृश्यानुतपतीत्याह—यदीत्यादिना ॥ गूढचरै =गूढ अन्यैरविज्ञात यथा तथा चरद्भि । भटकल्पै =अव्यक्तपरिकरत्वात् भटसदृशैरङ्गरक्षकपुरुषै । स महात्मा रक्षित यदि=पालितश्चेत् । इय विपत् =एषा आपत्। न भवेत्=न भविष्यति। तत्=अङ्गरक्षकसाहचर्यं अनिष्ट=महात्मनो नेष्ट "इन्द्रियसुखसर्वस्व परित्यज्य परार्थमीश्वरेच्छया वा जीवतो मे भौतिक रक्षाकर्म नापेक्षित निष्फल चेति विश्रम्भातिशयादङ्गरक्षाचिन्ता महात्मना बहुशो निरस्ताभूदि ति वस्तुवृत्तमत्रानुसन्धेयम । इति तु असाप्रत=एवविधेन हेतुना कर्तव्य तदुपेक्षित चेत् तदयुक्तमित्यर्थ । हि=यस्माद्धेतो। सर्वं औषध=औषधशब्दोऽत्र दु खपरिहरणोपायमात्रमुपलक्षयति। स्वादु =मधुर । हित च=दोषनाशोपयोगि च न भवति । महात्मन पक्षमविगणय्य तथा करणे न दोष इत्यभिप्राय । वस्तुतस्तु प्रार्थनमण्डपे समवेताना परीक्षणार्थ पोल्क (Police) पुरुषाणा विंशति सैनिकाना विंश्च नियुक्ते आस्ताम्। अवसरेस्मिन् दैवात्तेषा प्रमाद इवाजायत ॥

"पुरुषोपि करोति नाखिलं विधिरेवे"ति महात्मनोदितम् ।
उषसि, स्वयमेव, वेद कस्तदयं सायमुदाहरेदिति ॥ ९१ ॥

सर्वमीश्वरः करोति कारयति चेति कथमस्माकमत्रापराध इति पक्षं निराकरोति महात्मवचनेनैव—पुरुषोपीति ॥ पुरुषोपि= मनुजोपि । करोति=कर्मसु स्वयं प्रवर्तते । विधिः एव=दैवमेव । अखिलं न=सर्वं कर्म न करोतीत्यर्थः । इति=एवं । महात्मना= स्वप्राणत्यागदिवसेस्मिन्, उषसि=पूर्वाह्णे । स्वयमेव=न केनापि पृष्टेन इत्यर्थः । प्रसङ्गात्, उदितं=उक्तं, इदं च वस्तुवृत्तं । सायं= तस्मिन्नेवापराह्णे । अयं=महात्मा । तत्=स्ववचनं । उदाहरेत्= निदर्शयेत् । इति कः वेद=को जानाति । तदानीं तद्वचनस्यैवंविधः, पापिनः कस्य पि पौरुषाभासेन देहत्यागात्मकः, परिणामो न प्रबुद्ध इति भावः ॥

भयमस्य मुनेर्निरागसः कुत इत्याप्तजनैरुदासितम् ।
रघुवीरहतं तपस्विनं किल शम्बूकममी न चास्मरन् ॥ ९२ ॥

हन्तास्याप्तमित्राणामुदासीनत्वे कोहेतुरित्याह—मुनेः=जितेन्द्रियस्य रागवर्जितस्य । निरागसः=निरपराधस्य द्वेषरहितस्य । अस्य=महात्मनः । कुतः=कस्मात् जनात्, भयं=पीडाशङ्का, न कुतोपि भेतव्यमस्तीत्यर्थः । इति=एवं मत्वा । आप्तजनैः=सुहृद्भिः । उदासितं=पापशङ्कां विना स्थितम् । प्रमादोयमित्याह—तपस्विनं= तपसि स्थितं । रघुवीरहतं=श्रीरामचन्द्रेण हतं । शम्बूकं=तथा- ख्यं शूद्रं । किल=प्रसिद्धौ, अमी=सुहृदः । न चास्मरन्=न स्मृतवन्तः । उत्तररामायणीया एतत्काव्यस्य ५६ तमे पद्यव्याख्याने प्रदर्शिता कथात्रानुसन्धेया । अपराधाभावः पुण्यं तपश्चात्र न किञ्चिदुपकरोतीति भावः ॥

स्थितिकर्मणि तद्वपुर्विधोः करणं नश्यति नैव दैवतः ।
इति विश्वसता च विस्मृतं भगवद्वेधिकिरातसाहसम् ॥ ९३ ॥

वैष्णवत्वमप्यत्राकिञ्चित्करमित्याह—स्थितिकर्मणीति ॥ तद्-वपुः=तस्य देहः । स्थितिकर्मणि=जगद्रक्षाकार्ये । विधोः=विष्णोः । करणं=उपकरणं । सत्यधर्मादिपालनेन लोकस्थितिकार्ये महात्मा विष्णोः सहकारीत्यभिप्रायः । ततः दैवतः=विधेः सकाशात् । नैव नश्यति=न विनश्यत्येव । इति=एवं । विश्वसता=विश्वासवता, जनेन च । भगवद्वेधिकिरातसाहसं=भगवद्वेधिनः-भगवन्तं श्रीकृष्णं विध्यतीति तथाविधस्य, किरातस्य साहसं—विचाररहितं कर्म । विस्मृतं=न प्रबुद्धम् । विष्णोरवतारः पुरुषोत्तमः किरातेन हतः किं पुनरस्य इति भावः ॥

न हि कोपि तडित्करण्डवत् वपुरस्य स्पृशति स्वमृत्यवे ।
इति बद्धसमाधयोधुना न विदुः किं मदनस्य विक्रमम् ॥ ९४

आत्मनाशभयादप्यस्य प्रतिकूलं कश्चिन्न करोतीति पक्षोपि न युक्त इत्याह—न हि कोपीति ॥ तडित्करण्डवत्=विद्युच्छक्त्या-धारभूतं करण्डकमिव स्थितं । अस्य=गान्धिनो, वपुः=गात्रं । स्वमृत्यवे=कर्तुः मृतये । कोपि न स्पृशति=कश्चिन्नाक्रामतीत्यर्थः । यथा तडित्करण्डकस्पर्शस्य फलं स्वमृत्युरेव तथा महात्माभियोगस्यापीति भावः । इति=एवं । बद्धसमाधयः=बद्धः दृढीकृतः, समाधिर्निश्चयो यैस्ते । अधुना=अस्मिन् वर्तमानकाले प्रवृत्तं । मदनस्य="मदनलाल"ख्यस्य कस्यचित्पञ्जाबिशस्य । विक्रमं=पराक्रमं, न विदुः किं=न जानन्ति वा इत्याक्षेपः । कतिपयदिनेभ्यः प्राक् महात्मनिप्रहारार्थं "बोंब"प्रक्षेपणं कृतवान् मदनलालः राज-

पोद्धतं = गर्वसमुद्धतं । किमपि = वक्ष्यमाणरूपं । वचः = वचनं । उच्चैः = तारस्वरेण । निजगाद = अब्रवीत् । तत्तादृशक्रोधशोकानुतापकलुषेण, देव्या वचसा नास्य दर्पशान्तिः पश्चात्तापो वाजायत, प्रत्युत स्वकर्म धर्मानुगतमेवेत्ययमभिमन्यत इति भावः ॥

"अनियन्त्रित"हिंसया हतैः शतशः प्रेतगणैः पुरस्कृतः ।
स "विनायकगोदशो"स्म्यहं प्रथितः क्वापि च "नात्तुरा"मिति ॥

तद्वचनं पञ्चभिराह—अनियन्त्रितेत्यादिभिः । अनियन्त्रितहिंसया = केनाप्यनिवारितेन विप्रतस्थैः कृतेन हिंसाकर्मणा । शतशः = अनेकशतसङ्ख्यया । हतैः = निहतैः, विरोधिभिः क्रियमाणापि हिंसा न निरोद्धव्येति महात्मनः अहिंसाधर्मोपदेशं प्रत्याक्षेपं मनसि कृत्वैवमुक्तिः । प्रेतगणैः = अपमृत्युवशादन्तराले संभ्रमद्भिर्जीवैः । पुरस्कृतः = तत्कार्यधुरंधरतया नियमितः । सः वक्ष्यमाणरीत्या प्रसिद्धः । विनायकगोदशः = "विनायकगोड्से" इति देशभाषायां संज्ञितः । क्वापि = केषुचिद्देशेषु, "नात्तुराम्" इति प्रथितः = नात्तुरामसंज्ञया ख्यातः । एवं "नात्तुराम्, विनायकगोड्से" इति संज्ञितः अहमस्मि । स्वनामग्रणमौद्धत्यात् । विगतः नायको—नियन्ता यस्य तथाविधस्य गोः—बलीवर्दस्य, दशेव दशा—यथेष्टाचाररूपा यस्येति विग्रहेणान्वर्थत्वमेतत्संज्ञायाः प्रत्येतव्यत् ॥

न बिभेमि लिखामि राष्ट्रियव्यवहारं विमृशाम्यनर्गलम् ।
प्रथिता, मम "हिन्दुराष्ट्र"मित्यनया पत्रिकयार्यधर्मिता ॥ ९८

न बिभेमीति ॥ न बिभेमि = भीतो न भवामि । लिखामि = लेखनं करोमि, वृत्तान्तपत्रेष्वित्यर्थः । राष्ट्रियव्यवहारं = राष्ट्रसंबन्धिनं व्यवहारं, अधिकारिणां जननायकानां च नीतिनिर्वहणं

तथिदेशं च । अनर्गलं = स्वेच्छानुसारेण । विमृशामि = गुणदोष-विवेचनं करोमि सभासु ग्रन्थविशेषप्रकाशनेन चेत्यर्थः । मम आर्यधर्मिता = आर्यधर्मः हैन्दवधर्मः, वर्णाश्रमव्यवस्थारूपः सोस्यास्तीति तथात्वं । तेन, हैन्दवधर्मेणैव भारते योगक्षेमपालनं कार्यं। अन्यथा महती विपत्तिरिति मे पक्षबन्ध इति भावः । "हिन्दुराष्ट्र" इति अनया = हिन्दुराष्ट्राख्यया, मया प्रसाध्यमानया, पत्रिकया = वृत्तान्तपत्रेण, प्रथिता = प्रसिद्धा । अत्यन्तमेववर्णाश्रमपक्षपाती सोहमिति भावः ॥

न हि वैरमनादरोपि वा मम देवे च गुरौ च गान्धिनि ।
अमहात्मकमिच्छता जगत् जगदीशेन कृतोहमायुधम् ॥९९॥

कलहकारणादिप्रश्नमुत्तरयति, न हीत्यादिना । मम, देवे गुरौ = धर्माचार्येषु । गान्धिनि = महात्मनि च । वैरं = विद्वेषः । अनादरः = आदराभावश्च वा । न हि नास्त्येव । तुल्ययोगेन गान्धिनो माहात्म्यं पूज्यत्वं च स्वाभिमतमेवेति सूचितम् । पुनरेवं घोरकर्म कुत इत्याह—जगत् = इदं भुवनं । अमहात्मकं = महात्म-गान्धिरहितं । इच्छता = कामयता । जगदीशेन = ईश्वरेण । अहं आयुधं कृतः = आयुधस्थाने गृहीतोहम् । ईश्वराज्ञया संभूतमिद-मिति भावः ॥

अतिवर्षमकालवर्षणं जलदे जीवनदेपि नेष्यते ।
नियतिः समयोगकांक्षिणी न खलु व्यक्तिविशेषमीक्षते ॥

ईश्वरेच्छाया गान्धिमते कथं विरोध इत्याशङ्क्याह, अति-वर्षेति ॥ जलदे = मेघे । जीवनदेपि = प्राणधारणोपयोगिनः पानी-यस्य प्रदातरि अपि । अतिवर्षं = अमितवर्षणं, अकालवर्षणं = अल्पमध्यकाले वर्षणं । तदुभयमपि, नेष्यते = न युज्यते । जीवन-

प्रद्देयमिति कृत्वा तस्यातियोगं मिथ्यायोगं च जना न सहन्त इत्यर्थः । अतस्तद्धेतुपरिहरणमीश्वरस्य कर्तव्यमभूदिति भावः । हन्त गान्धिनो माहात्म्यमीश्वरप्रतिकूलं वा इत्यत्राह—समयोगकांक्षिणी=आधिक्यं न्यूनत्वं च विना कालदेशाद्यनुकूलः यः समो योगः सम्बन्ध उपायो वा तं कांक्षतीति तथाविधा । नियतिः=ईश्वरशक्तिः । व्यक्तिविशेषं=हीनमिथ्यातियोगहेतुभूतायां व्यक्तौ विशेषान्तरमस्ति चेत् तत् । न ईक्षते=न गणयति । समयोगसिद्धये मुग्धेव प्रकृतिः स्वच्छन्दं प्रवर्तत इत्यर्थः । भवितव्यताया-मस्यां न कस्याप्यपराध इति भावः ॥

अधुना मृतिरावयोर्हिता मरणं मारणमप्यनिच्छतोः ।
नलिकास्त्रमतो धृतं मया व्रतमन्येन निरन्नताव्रतम् ॥ १०१ ॥

*महात्मापीश्वरमतमिदं जानातीति सोदाहरणमाह, अधुनेति ॥* अधुना=अस्मिन् काले । मरणं=स्वस्य स्वकीयानां वा मृत्युं । मारणं=अन्येषां निग्रहं अपि, अनिच्छतोः=अनिष्टं मन्यमानयोः । आवयोः=मम गान्धिनश्च । अहमन्यकृतामात्मीयहिंसां न सहे । महात्मा तु स्वकीयकृतामन्यहिंसां न सहते । तदुभयमप्यस्मिन् काले दुर्निवारं भूयिष्ठं च जातम् । ततो वरमावयोः प्राणत्यागः । अतः=अस्माद्धेतोः । मया नलिकास्त्रं धृतं=गान्धिनि मया हते स्वमरणं निश्चितमिष्टं चेति धैर्यमवलम्ब्येति भावः । अन्येन=महात्मना । निरन्नताव्रतं=उपवासः । धृतं=स्वेच्छया स्वीकृतम् । "विपक्षाननुकूलयितुमसमर्थस्य अहिंसाव्रतिनो मृतिरेव वरं" इति निश्चयेनेति भावः । यतो मयि न पापित्वशङ्का युज्यत इत्यभिप्रायः । अनन्तरातीतो महात्मन उपवासोऽत्र स्मर्तव्यो हि स्वमरणपर्यन्त इति प्रकाशितः ॥

अथ तं परिवर्ज्य विस्मृतस्वपरार्था त्वरितस्खलद्गतिः ।
अमहत्त्वमनात्मकं प्रभोरहिनिर्मोकमुपाजगाम सा ॥ १०२ ॥

अथ = तद्वचनश्रवणानन्तरं । तं = गोदशं । परिवर्ज्य = तत्सन्निधिं त्यक्त्वा । सा = भारतदेवता । विस्मृतस्वपरार्था = विस्मृतः स्वस्य परस्य चार्थः—कार्यं यया सा, कर्तव्यमूढा सतीत्यर्थः । त्वरितस्खलद्गतिः = त्वरिता—व्यग्रा, स्खलन्ती—निरवधाना च गतिः—पादन्यासक्रमः यस्या सा । अमहत्त्व = महत्त्वरहित । अनात्मकं = आत्मरहितं, निर्जीवं, प्रभोः = सर्वातिशायिमाहात्म्यशालिन । अहिनिर्मोकं = सर्पकञ्चुकं बाह्य जडमधमयकोशमात्रमित्यर्थः । उपाजगाम = उपागच्छत् । अहिनिर्मोको हि सजीवसर्पस्मृतिद्वारा भयं जनयति । निर्जीवश्चायं महात्मनो देहस्तदीयप्रभावस्मृतिद्वारा शोकानलमुज्ज्वलयतीत्युद्वेगजनकत्वसामान्यात्तयोरभेदारोप ॥

परिवेष्टनमश्रुवर्षणक्षणविक्लेदितरक्तबिन्दुकम् ।
कथमप्यवलोकितं तया निजहृद्भेदभयात्तु नोद्धृतम् ॥ १०३ ॥

परिवेष्टनमिति ॥ तया = देव्या । परिवेष्टनं = आवरणवस्त्रं । अश्रुवर्षणक्षणविक्लेदितरक्तबिन्दुकं = अश्रुवर्षणेन क्षणाद्विक्लेदिताः—तत्क्षणप्रवृत्तबाष्पधारया द्रवीकृता रक्तबिन्दवो यस्मिन् कर्मणि तद्यथा भवति तथा । कथमपि = कृच्छ्रेण दुःसहशोकावेगभ्रमविक्षिप्तदर्शितयेत्यर्थः । अवलोकितं = दृष्टं । किं तु न उद्धृतं = न उन्मोचितं । निजहृद्भेदभयात् = स्वहृदयस्फुटनभयादित्युत्प्रेक्षा ॥

अयि नाथ ! गतोसि हा गतः क्व गतोसीति हठादताडयत् ।
निजवक्षसि हृद्गतस्य निर्गतिमाशङ्क्य तु न व्यपाटयत् ॥

अयीति ॥ अयि नाथ=प्रियसंबोधनमेतत् । स्वपालकत्वेन विलापौचित्याच्च प्रियत्वारोपः । गतोसि=निर्यातोसि । हा गतः= हन्त नष्टः । क्व गतोसि=कुत्र गतोसि । इति=इत्युक्त्वा प्राकृत-स्त्रीसाधारणचित्तविकारमूर्च्छितेव, निजवक्षसि=स्वहृदयमित्तौ । हठात्=बलात् । अताडयत्=ताडनमकरोत् । तु=किंतु । हृद-तस्य=हृदयगोचरस्य तस्येति शेषः । निर्गतिं=बहिर्गमनं । आश-ङ्क्य=सन्दिह्य, आशङ्का नामानिष्टप्राप्तिसंभावना । हृदयादपि तद्वियोगो माभूदिति सङ्कल्प्येति भावः । इयमुत्प्रेक्षा गम्या । न व्यपाटयत्=वक्षःपाठनं नाकरोत् । अनेन ताडनस्य तीक्ष्णत्वं तद्धेतुभूतश्चित्तविक्षेपातिरेकश्च व्यज्यते ॥

अहहाद्भुतवैभवं वपुर्नृपतिप्रार्थितदुर्लभेक्षणम् ।
पतितं भुवि पादरेणुसंग्रहणोत्कण्ठितसाधुसंहति ॥ १०५ ॥

अतः परमस्या विलापवर्णनमेव, अहहेति ॥ अहहेति=शोका-वेगसङ्कटस्फुटितः शब्दः । अद्भुतवैभवं=अनन्यगोचरं माहात्म्यं यस्य तत् । नृपतिप्रार्थितदुर्लभेक्षणं=नृपतिभिः—महाराजैरपि, प्रार्थितं—याचितं, दुर्लभं—दुष्प्रापं च, ईक्षणं—दर्शनं यस्य । हरि-जनोद्धरणादिकर्मसु सदा व्यापृतस्य तस्य प्रभुजनेषु न तावन्मात्र-माभिमुख्यमिति भावः । पादरेणुसंग्रहणोत्कण्ठितसाधुसंहति= पादरेणूनां-पादधूलीनां, संग्रहणे-सञ्चयने, उत्कण्ठिता-उत्सुका, साधुसंहतिः=सज्जनसमूहः यस्य तत् । लोकानुग्रहाय निष्कामं व्यवहरतस्तस्य पादस्पर्शः सद्भिरभिलष्यत इति भावः । तथाविधं वपुः=गात्रं । भुवि=भूमौ । पतितं दृश्यत इति शेषः । पतना-नन्तरक्षणे आवागान्धया महात्मनः शिरः कथञ्चित् स्वाङ्के समारोप्य धृतमिति वस्तु वृत्तम् ॥

अजडः परमेश्वरस्त्वमित्यमरत्वं त्वयि वीक्षितं मया ।
सदसत्समवर्तिनो विधेरिह धिक् तां परमस्वतन्त्रताम् ॥ १०६

अजडेति ॥ त्वं अजडः=जाड्यमज्ञानं तद्रहितः सर्वज्ञ इत्यर्थः । परमेश्वरः=परमश्चासावीश्वरश्च सर्वशक्त इत्यर्थः । इति=एवं ज्ञात्वा । अमरत्वं=मरणरहितत्वं । त्वयि=भवति । मया वीक्षितं=दृष्टं सङ्कल्पितमित्यर्थः । सदसत्समवर्तिनः=सत्सु असत्सु च समं—अविशेषेण "सज्जनो न तावद्धन्तव्यो यथा असज्जन" इति विशेषं परित्यज्य, वर्तमानस्य संहाररूपं कर्म कुर्वतः । विधेः=कालात्मनो रुद्रस्य । इह=अस्मिन् लोके । परमस्वतन्त्रतां=परमा-उत्कृष्टापकृष्टचिन्तातिशायिनी, या स्वतन्त्रता-स्वच्छन्दधृष्टिता, तां धिक्=सा निन्द्यैवेति भावः ॥

हरिनामशतप्रतिध्वनिप्रयतप्रार्थनमञ्चनिद्रितः ।
प्रतिपालयसीव वैष्णवं तव यानं दिवि, हा धिगस्तु माम् ॥

हरिनामेति ॥ हरिनामशतप्रतिध्वनिप्रयतप्रार्थनमञ्चनिद्रितः=हरिनामानां—"रघुपतिराघव राजाराम् पतितपावन सीताराम्" इत्यादिरूपेण प्रतिदिनमुच्चैः प्रार्थनावसरेषु जनैः सह समुद्घुष्टानां, प्रतिध्वनिना-प्रतिशब्देन, तन्मण्डपान्तरालभित्तिप्रसक्तेनेति भावः, प्रयते—पवित्रे, प्रार्थनमञ्चे—तदर्थं निर्मिते पर्यङ्के, निद्रितः—सुप्तः, तथा निभृतं शयानः । वैष्णवं=विष्णुलोकात् समागच्छत् । दिवि=आकाशे । तव यानं=त्वदर्थं विनियुक्तं पारलौकिकं वाहनं । प्रतिपालयसि इव=प्रतीक्षसे इवेत्युत्प्रेक्षा । यथा पुण्यक्षेत्रयात्रायां पान्थः शकटागमनं प्रतीक्ष्य विश्रमालयमञ्चे कतिचित् क्षणान् निद्राति तथेति भावः । हा मां धिक्=त्वया परित्यक्ता न जीवितुमिच्छामीत्यर्थः ॥

न हि किञ्चिदवेदिषं पुरा परपुष्टा विवशापि वैशसम् ।
उपनीय तु मानिता, परैः परिपीड्ये, रहिता च हा त्वया ॥

न हीति ॥ पुरा=पूर्वकाले । परपुष्टा=परैः—विदेशीयै-र्विमतस्थैः, आङ्गलद्वीपस्थैरिति भावः । पुष्टा—संरक्षिता । अत एव विवशा=अस्वतन्त्रा, अपि । किञ्चित् वैशसं=एतादृशं किमपि दुःखं । न अवेदिषं=नान्वभूवं । उपनीय तु=उपनयनं कृत्वा तु, स्त्रीणामुपनयनं हि परिणयः तेन भर्तुरुपस्थानं च । तेन मानिता= बहुमतापि । परैः=शत्रुभिः द्वेषादसूयया च कलहायमानैः । परि-पीड्ये=पीडितास्मि । त्वया=शरण्यभूतेन । रहिता च=वियुक्ता च । हा! कष्टं! दुःसहोयं ताप इति भावः । पारतन्त्र्यं प्राक्तनं त्वया सहानुभूतं वरमेतस्मादत्याहितादित्यभिप्रायः ॥

मम नोड्डयनस्वतन्त्रता क्षतपक्षद्वयमूलघट्टनात् ।
निजहृद्रसधारयापि तच्छमनं कामयसे धिगस्तु माम् ॥ १०९

ममेति ॥ क्षतपक्षद्वयमूलघट्टनात्=क्षतं-व्रणितं, पक्षयोः-"पाकिस्थान हिन्दुस्थान" विभागेन खण्डितयोः द्वयं, तस्य मूलं—तत्कारणभूतं धर्माचारवैजात्यं, तस्य घट्टनात्—इतरेतरपीडनात् । मम उड्डयनस्वतन्त्रता=उड्डयने—ऊर्ध्वगमने, योगक्षेमप्रसाधनकर्म-णीत्यर्थः । स्वतन्त्रता—स्वच्छन्दचेष्टासौकर्यं नास्ति । यथा काचित् पक्षिणी पक्षद्वयमूले व्रणिते स्वयमुत्पतनं प्रत्यसमर्था भवति तथे-त्युपमात्र व्यक्ता । निजहृद्रसधारया=स्वहृदयान्निर्गतस्य रसस्य लोहितस्य धारयापि, तच्छमनं=तस्य व्रणस्य, शमनं—रोपणं । कामयसे=इच्छसीति काकुः । मर्मक्षतचिकित्सायां शुद्धरक्तसेकः सांप्रदायिक एव । विमतस्थप्रसादनाय प्राणत्यागोऽपि कार्य इति स्वमतमुदाहर्तुं महात्मा स्वयमीदृशं वैशसं वृणुत इति प्रसिद्धमर्थ-

माधिरयैवमुक्तम् । धिक् अस्तु मां = मत्कृते इन्तानुभूतादशेय-मिति पापदग्धाहमेव निन्द्येति भावः ॥

अकलङ्कमशेषमोहनं मृदुमन्दस्मितकौमुदीरसम् ।
प्रिय ! दर्शय तावदाननं हृदयावर्जकपुण्यदर्शनम् ॥ ११० ॥

अकलङ्कमिति ॥ अकलङ्कं = मनःकलङ्कचिह्नलेशास्पृष्टं, प्रसन्न-मित्यर्थः । अशेषमोहनं = सर्वचेतोहरं । मृदुमन्दस्मितकौमुदीरस = मृदुमन्दस्मितमेव कौमुदीरसः चन्द्रिकासार आह्लादकारी धर्मः यस्य तत् । हृदयावर्जकपुण्यदर्शनं = हृदयं—मनः आवर्जयति आकर्षतीति अत्यन्तमौत्सुक्यजनकमित्यर्थः । पुण्यं—पवित्रं, दर्शन-मात्रेण द्रष्टुर्मनसि सात्त्विकधर्मोदयादित्यर्थः । दर्शनं—आलोकनं यस्य तथाविधं । हे प्रिय ! = नाथ !, आननं = तव मुखं । तावत् = यथास्थितं । दर्शय = अस्मान् प्रदर्शय । तथाविधत्वन्मुखदर्शनं विना न जीवधारणमिष्टमित्यभिप्रायः ॥

इति बहु विलपन्ती, सा पतन्ती, लुठन्ती
निजशिरसि कठोरं ताडयन्ती रुदन्ती ।
क्रमविगलितसंज्ञा, मूर्च्छिता भारतश्रीः
स्फुटितमपि च वाक्यं किञ्चिदेवं नभस्तः ॥ ११२॥

इत्थमत्र दिङ्मात्रोपात्तं विलापमुपसंहरति, इतीति ॥ इति = एवं । बहु = अनेकप्रकारेण । विलपन्ती = विलापं कुर्वन्ती, सा भारतश्रीः = भरतक्षितिदेवता । पतन्ती लुठन्ती = भूमौ निपत्य लोठनं कुर्वन्ती । निजशिरसि = स्वमूर्ध्नि । कठोरं = जीवितनिराशतयातिघोरं । ताडयन्ती = प्रहरन्ती । रुदन्ती = तथाक्रन्दमाना । क्रमविगलितसंज्ञा = क्रमेण विगलिता-शिथिलीभूता संज्ञा-बुद्धिः यस्यास्तथा । मूर्च्छिता = मोहान्धकारं गता अभूत् । एवं = वक्ष्यमाणविधं । किञ्चित् वाक्यं=किमपि वचनं । नभस्तः = आकाशात् । स्फुटितं = स्पष्टमुत्थितं च । मूर्च्छनसमकालमेवेति भावः । प्रायः सर्वानुभवगोचरे दैवव्यपाश्रये, चार्थे वक्तव्ये वक्तृश्रोतृदेशकालादिनिरपेक्षं वचनस्य निरुपाधिकं प्रामाण्यमभिप्रेत्याकाशवाणीत्वमारोप्य कवयस्तदवतारयन्तीति सम्प्रदायोऽत्राङ्गीकृतः ॥

अये! शोकेनालं नियतिरुपनद्धश्रुतिरहो
तवाक्रन्दो व्यर्थः पतिरतनुसत्त्वोऽद्य जयति ।
त्वदङ्गालङ्काराः खलु तदुपनीतास्तव मुदे
नवं सत्याहिंसाव्रतमुपकरिष्यन्ति बलिनः ॥ ११३ ॥

तदेव वचनमाह, अये इति ॥ अये! = इति सकरुणं संबोधनं । शोकेन अलं = शोको माभूत् । तव = ते । आक्रन्दः = उच्चैस्तरं

रोदनं । व्यर्थः=निष्फलः । कुत इति चेत्, नियतिः=सर्ववस्तु-नियामिका ईश्वरशक्तिः । उपनद्धश्रुतिः=उपनद्धा—बद्धा, श्रुतिः—श्रवणेन्द्रियं यस्याः सा केनाप्यगोचरेण हेतुना तस्याः कर्तव्ये ह्यनेमितप्रश्नैः क्रियमाणमाक्रन्दनं केवलं बधिरकर्णजाप एवेति स्वभावो न शक्यमन्यथाकर्तुमिति भावः । किं पुनरत्राश्वासस्थानमित्यत्राह—पतिरिति । पतिः=तव नाथः महात्मा । अद्य=अस्मिन् दिने । अतनुसत्त्वः=तनुरहितो जीवः, अनल्पसत्त्वगुणसंपन्नश्च । जयति=सर्वोत्कर्षेण वर्तते । शरीरधारणकाले विवेकिनामपि प्रारब्धवशात् रजसस्तमसश्चानुवृत्तिर्धर्मभ्रमावकाशश्चावश्य संभाव्यते । सर्वात्मभावानुभवस्तदा न पूर्णो भवति । विदेहभावे तु रजस्तमोविमुक्तेन सत्त्वेनात्मानन्दः पूर्णोऽनुभूयते । एवमशोच्यस्य महात्मनस्तावच्छुद्धं शान्तं चावस्थान्तरमिदमद्यास्माभिरभिनन्दनीयमर्चनीयं चेति नात्र शोकावकाश इति भावः । तर्हि का गतिर्ममेत्यत आह, त्वदङ्केति । तदुपनीताः=तेनोपनीताः शिक्षिताः, सिद्धस्य भारतस्वातन्त्र्यस्य परिपालने इत्यर्थः । बलिनः=शक्ताः, बलं प्रभुप्रसादमन्त्रशक्तिरूपं येषामस्तीति तथाभूता इत्यर्थः । त्वदङ्कालङ्काराः=तव अङ्कस्य—उत्सङ्गस्यालङ्कारभूताः पुत्रस्थाने त्वया परिलालिताः पोषिताश्च । नयं=वर्तमानदशानुसारेण परिवर्तितं । सत्याहिंसामतं=सत्यमतमहिंसामतं च, स्वार्थपरित्यागपूर्वकं सत्यपरिपालनं आत्मपीडावरणेनापि परपीडापरिवर्जनपूर्वकं स्वधर्मनिष्ठाऽदार्ढ्यं चात्र मतलक्षणं विवक्षितम् । तव=ते । मुदे=सुखसिद्धये । उपकरिष्यन्ति खलु—निर्वर्तयिष्यन्त्येव । महात्मोपज्ञाते वर्त्मनि चरन्तः "पण्डित-नेहरूपाटेल"प्रभृतयस्तत्परोक्षेऽपि तात्पर्येण भारतीययोगक्षेमनिर्वहणे प्रवर्तेरन्निति न किञ्चिदत्र विषादस्थानमस्तीत्यभिप्रायः ॥

"अध्यात्मं चाधिभूतं मिलितमिह, कमप्यर्थमाविष्करोति
प्रत्येकं तत्समर्थं न भवति, विपदे सम्पदे वापितस्मात् ।
जातिव्यक्तिक्रियासु, स्वपरमतभिदामस्पृशन्ती प्रभूणां
प्रौढा सामान्यदृष्टिर्जयति, जनहितालम्बिनां निर्मलश्रीः ॥"

॥ शुभम् ॥



Printed at The Scholar Press, Palghat.

| भागः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| 42 | 4 | तयनु | तयानु |
| " | 7 | तिलक | तिलकं |
| 44 | 5 | प्रज्ञाप-रा | प्रज्ञापरा |
| 46 | 16 | वैधकम् | वैद्यकम् |
| 47 | 19 | महार्घं | महार्घ |
| 48 | 15 | णवगं | णवेगं |
| " | 16 | भौपज्य | भैपज्य |
| 51 | 20 | नतघोणं | नतघोणं |
| " | 21 | लोभ | लोम |
| 53 | 4 | पादपाघातैः | पादाघातैः |
| " | 5 | मूभ्रः | मूर्भ्रः |
| 54 | 16 | मिघ्रता | मिघ्रता |
| " | 21 | " | " |
| 56 | 2 | स्यर्धः | स्यर्थः |
| " | 13 | प्रत्याघातो | प्रस्याघातो |
| 57 | 17 | चाघपि | चाद्यपि |
| " | 20 | अघ | अद्य |
| 59 | 13 | कृत | कुत |
| 62 | 5 | "अनियन्त्रित"र्हि | अनियन्त्रितर्हि |
| " | 16 | स्वनाम | स्वनाम |
| 64 | 23 | सर्तव्ययो | सर्तव्यो |
| 67 | 16 | समुद्घृष्ट | समुद्घुष्ट |
| 69 | 20 | यस्यादर्शनं | यस्या दर्शनं |

